Approved by the Text-Book Committee.

# काव्यमञ्जरी

संक्षिप्तटीकया समेता

श्रीचण्डीचरण स्मृतिभूषणेन




नवम संस्करणम्

# KAVYAMANJARI

## ( WITH NOTES )

BY

CHANDICHARAN SMRITIBHUSHAN

**Ninth Edition**

HARE PRESS: CALCUTTA

1908



Price Six Annas] [মূল্য ছয় আনা

Approved by the Text-Book Committee.

---

# काव्यमञ्जरी

संक्षिप्तटीकया समेता

श्रीचण्डीचरण स्मृतिभूषणेन

सङ्कलय्य प्रकाशिता

नवम संस्करणम्

कलिकाता-राजधान्याम्

४६ नं० बेचुचाटुर्य्येर ष्ट्रीट्, हेयार प्रेसे

श्रीराधिकाप्रसाद दत्तेन

मुद्रिता

संवत् १९६४

# বিজ্ঞাপন।

---

বেতালপঞ্চবিংশতি, পঞ্চতন্ত্র, হিতোপদেশ, পদ্ম-পুরাণ, বৃহচ্চাণক্য, রামায়ণ ও গরুড়পুরাণ হইতে সঙ্কলন করিয়া কাব্যমঞ্জরীনামক এই গ্রন্থখানি আমি প্রকাশিত করিলাম। ইহাতে যে কয়েকটী বিষয় সন্নিবেশিত হইয়াছে, সেইগুলি সমস্তই নীতিগর্ভ। ফলতঃ বিদ্যাসাগর মহাশয়ের তৃতীয়ভাগ ঋজুপাঠের প্রণালী অনুসারেই ইহা সংগৃহীত। ইহাতে স্থানে স্থানে দুরূহ ও অশ্লীল সমস্ত অংশই পরিবর্ত্তিত এবং কঠিন শব্দগুলির অর্থ সম্যগ্রূপে বিবৃত হইয়াছে। এক্ষণে শিক্ষাবিভাগের অধ্যক্ষ মহোদয়গণ এবং পুস্তক-নির্ব্বাচনসভার সভ্য মহোদয়গণ এই ক্ষুদ্র গ্রন্থখানির প্রতি দৃষ্টিপাত করিলেই শ্রম সার্থক হয়।

সঙ্কলয়িতা

শ্রীচণ্ডীচরণ শর্ম্মা।

# सूचीपत्रम् ।

---

# काव्यमञ्जरी।

## प्रथमोपाख्यानम्।

कस्मिंश्चिद्देशे एको ब्राह्मण आसीत्। स एकदा तीर्थानि पर्य्यटितुमभिलषन् तस्य कस्यचिन्मित्रस्य समीपमित्वा प्रोवाच, सखे! बहवः काला मुधैव (१) यापिता, नैवेदृक् (२) किमप्यनुष्ठितं यत् मे परित्राणाय कल्पते, संसारासक्तिर्हि परमार्थविरोधिनी (३), ममेयं भार्य्या पुत्त्रो ममायमिति ममत्वबुद्धिः (४) क्लेशपरम्परा-हेतुः दुःखं हि शरीरजन्म (५) पुत्त्रकलत्रादिभिरुप-चीयमानं (६) मोक्षस्य लोकानां (७) अन्तरायो भवेत्।

विषयासक्तचित्तस्य बुद्धिरविरलम् (८) आविला

---

(१) वृथैव। (२) इदं दर्शनमस्य ईदृक् इति। (३) मोक्षपथप्रतिबन्धिका। (४) ममायमित्यभिमानः। रज्जौ सर्पत्वप्रकारभ्रान्तिमूलः न तु याथार्थ्यं इति भावः।

(५) शरीरात् जन्म यस्य तदिति विग्रहः। (६) वृद्धिं गच्छत् सत्। पुत्त्रदारादिवियोगेन तेषां रोगाद्युपद्रवैश्च शरीरजन्मक्लेशस्यातिवृद्धिर्भवेदिति भावः। (७) स्वर्गमर्त्त्यादीनाम्। अन्तरायः विघ्नजनकः। (८) सर्व्वक्षणम्।

(९) वर्त्तते। न किमपि तस्य शान्तये(१०) अलम्(११) अतोऽहमभिलषामि, (१२) कियतो दिनान् (१३) तीर्थाटनं करिष्यामि (१४)। किन्तु मे किञ्चित् धनं विद्यते (१५), त्वामृते ईदृशं कमपि नान्यं पश्यामि; यस्मिन् तत् विन्यस्य (१६) स्वस्थमना व्रजामि, इत्युक्त्वा वस्त्राभ्यन्तरात् भस्त्राम् (१७) एकां वहिष्कृत्य तस्य मित्रमिदमुवाच, रक्षणीयातियत्नतो ममैषा भस्त्रा, यावदहं न प्रत्यागच्छामि (१८) तावत् न कस्मैचिदपि दातव्येति। ततः स गृहमागत्य शुभक्षणमासाद्य तीर्थाटनाय प्रतस्थे।

अथासौ बन्धुर्विविक्ते (१९) भस्त्रां परीक्ष्य (२०) कतिपयसंख्यका (२१) रजतमुद्रा दृष्ट्वा भृशमाह्लादितः कतिपयानि ताम्रखण्डकानि निधाय(२२) तत्र स्थिता-नर्थानात्मसात् (२३) चकार। ब्राह्मणस्यासौ क्रमेण

---

(९) मलिना। (१०) शमताये, अलं योगे चतुर्थी। (११) समर्थः। (१२) प्रार्थयामि। (१३) यद्यपि दस्रादिनाहनीत्यमरोक्तेः रूपभेदाद्दिन-शब्दस्य क्लीवत्वं तथापि उक्तलिङ्गं क्वचित् व्यभिचरतीति नियमात् अत्र पुंस्त्वम्। (१४) विधास्यामि। (१५) वर्त्तते। (१६) संस्थाप्य। (१७) चर्म्म प्रसेविका पेटिकामिति यावत्। तोड़ा इति भाषा। (१८) प्रतिनिवर्त्त-यामि।

(१९) विजने। (२०) दृष्ट्वा। (२१) कतिपयाः संख्या येषां ते। (२२) अर्पयित्वा। (२३) निजाधीनम्।

वारानसीहरिद्वारवृन्दावनप्रभृतीनि तीर्थस्थानान्यवलोकयन् बह्वीः कालात् परं स्वदेशं प्रत्याजगाम (२४)। ततोऽसौ विन्यस्तभस्त्राप्रार्थनया मित्रमभ्युपैति(२५)स्म। तमागतमालोक्य परां मुदं दर्शयन् तस्य बन्धुर्विशिष्टशिष्टाचारेण (२६) तमभिमुखीचकार (२७)। मिथः (२८) स्वागतप्रश्नानन्तरं स ब्राह्मणस्तस्य भस्त्रां प्रार्थयामास। सोऽपि तत्क्षणमेव यदवस्थेयमासीत् अधुनापि तादृश्येव (२९) इत्युक्त्वा तामानीय तस्मै प्रत्यर्पितवान्। ब्राह्मणोऽपि भस्त्रामासाद्य हर्षातिरेकेण गृहमागत्य यावदीक्षांचक्रे (३०)।

तावत् कतिपयानि ताम्रखण्डानि विलोक्य शिरसि ताड़यन् प्रोवाच, अहो मुषितो (३१) ऽस्मि अनेन परस्वापहारिणा, हा (३२) धिक् मां यदहं धूर्त्तेन वञ्चितोऽस्मि, किमयं प्रत्ययस्य परिणामः (३३), किं कर्त्तव्यमिदानीं, नास्त्यत्र प्रमाणं किञ्चित्, यद् (३४) अहं धर्माधिकरणमेत्य विचारं प्रार्थयामि, भवतु तावत्, अहमपि वञ्चनामिमां प्रतिविधास्यामि (३५)।

(२४) प्रतिनिवृत्तः। (२५) प्राप्नोति। (२६) अधिकसभ्यताचरणेन। (२७) अनभिमुखं अभिमुखं कृतवान् अभिमुखीचकार। अभूततद्भावे च्विः। (२८) परस्परम्। (२९) तत्प्रकारैव। (३०) अवलोकयामास। (३१) वञ्चितः। (३२) हा खेदे। (३३) परिपाकः फलमिति यावत्। (३४) येन प्रमाणेनेति शेषः। (३५) प्रतिकरिष्यामि।

अथैकदा स ब्राह्मण: पुनरपि मित्रमियाय (३६)। मित्रमपि तमालोक्य हर्षातिरेकव्याजेन (३७) तमभ्यर्थयामास। ब्राह्मणोऽपि गुढ़ाकार (३८) मवलम्ब्य विविधै: प्रस्तावैस्तमतितोषयामास। कियति क्षणेऽतिगते स बन्धु: कार्य्यान्तरेण स्थानान्तरं जगाम। ब्राह्मणस्तु प्रतिविधानं चिन्तयंस्तत्रैव तस्थौ। सहसा तस्य मित्रस्य पुत्रक: सुवर्णालङ्कृत: क्रीड़ंस्तत्रोपतस्थौ। ब्राह्मणोऽपि तूर्णं तमङ्के निधाय स्वालयमाजगाम। तस्य शरीरात् भूषणानि व्यपनीय वानरमेकमलञ्चकार (३९), शृङ्खलितं (४०) च कृत्वा तं पुरद्वारि स्थापयामास, बालकमपि यत्नतो निभृतं सङ्गोपयामास।

अथ तस्य बन्धु: गृहमुपागम्य पुत्रमनालोक्य चिन्ताकुलमति: (४१) समन्तात् (४२) अनुसन्धातुम् (४३) आरेभे, अनुचरांश्च पुत्रान्वेषणाय चतुर्दिक्षु प्रेरयामास। अथासौ ब्राह्मणस्य द्वारमेत्य हृतपुत्रस्यालङ्कारै: शोभितं वानरमेकमालोक्य तमपृच्छत्, सखे! कुत: प्राप्तोऽसि भूषणान्येतानि? एतानि मम पुत्रस्यैव दृश्यन्ते, हृष्ट:

---

(३६) गतवान्। (३७) आनन्दातिशयच्छलेन। (३८) गुप्ताभिप्रायम्। (३९) भूषयामास। (४०) शृङ्खलाबद्धम्।

(४१) चिन्तया आकुला मतिर्यस्येति। (४२) सर्व्वत:। (४३) अन्वेषयितुम्।

किं मे स बालकः ? तदाकर्ण्य ब्राह्मणः प्राह, सखे ! बह्वोः (४४) कालात् परं भवतः सुतमालोक्य प्रवृद्धहर्ष-प्रकर्षः (४५) तमङ्के कृत्वा स्वालयमानीतवान्, किन्तु सहसा स वानरत्वमिदं गतः,अतः शृङ्खलेन संयम्य (४६) अत्रैव स्थापितवान्।

तदाकर्ण्य स प्राह, बन्धो ! क्षिप्तोऽसि किं,किमुप-हससि वा, किं नरः कदा वानरतामेति(४७)। नाक-र्णितं मया पुरैतद् (४८) भूतं, अधुना परिहासेनालं किमिदमनृतं (४९) कथ्यते ? स आह,भोः सत्यवादिन् ! यथा नरो न वानरतामेति तथा रजतमुद्रा नापि ताम्र-खण्डानि भवन्ति (५०)। तदर्पय ममार्थान्, यदि ते दारकेण (५१) प्रयोजनं (५२)। एवं तौ विवदमानौ(५३) द्वावपि राजकुलं (५४) गतौ। मम शिशुरनेन चौरेणाप-हृत (५५) इति सः बन्धुस्तारस्वरेण (५६) अकथयत्। धर्म्माधिकरणकाः (५७) तं ब्राह्मणमूचुः, भो समर्प्यतां (५८) मस्य सुतः।

---

(४४) अनेकात्। (४५) सञ्जातानन्दातिशयः। (४६) बद्धा।
(४७) कीशत्वम्। (४८) नरस्य वानरत्वम्। (४९) मिथ्याभूतम्।
(५०) जायन्ते। (५१) बालकेन। (५२) आवश्यकं अस्तीति शेषः। (५३) कलहं कुर्व्वाणौ। (५४) विचारालयम्। (५५) चौरितः। (५६) उच्चैः-स्वरेण। (५७) विचाराधिपाः। (५८) प्रदीयताम्।

ब्राह्मण उवाच, किं करोमि, शिशुरस्य वानरतां गतः। तच्छ्रुत्वा ते प्रोचुः, न त्वया सत्यमभिहितं, किं (५९) नरो वानरतामेति ? स आह, रजतमुद्राः किं (६०) ताम्रखण्डा भवेयुः ? ते प्रोचुः, कथमेतत् ? तदा ब्राह्मणः सभ्यानाम् (६१) आदितः (६२) सर्व्वं वृत्तान्तं (६३) निवेदयामास, ततस्तैर्विहस्य द्वावपि तौ सम्बोध्य (६४) परस्परं अर्थशिशुप्रदानेन सन्तोषितौ। साध्विद- (६५) मुक्तञ्च।

कृते (६६) प्रतिकृतिं कुर्य्यात् हिंसिते प्रतिहिंसितम्।
तत्र दोषं न पश्यामि शठे शाठ्यं समाचरेत् ॥

---

(५९) वितर्के। (६०) पृच्छायाम्। (६१) विचाराधिपानां, सभायां साधवः सभ्याः तेषाम्। (६२) अग्रतः। (६३) वार्त्ताम्। (६४) सम्भाष्य। (६५) मन्यमानम्। (६६) अपकारिणि जने। प्रतिकृतिं प्रतीकारं अपकाररूपमित्यर्थः। कुर्य्यात विदध्यात्। हिंसिते हन्तुमिष्टे जने। हन्तुमिच्छा सा सञ्जाता अस्य हिंसाशब्दात् इत। प्रतारके प्रतारणा न दोषाय किन्तु पुरुषत्वाय एवेति भावः।

# द्वितीयोपाख्यानम् ।

कस्मिंश्चिद्देशे शूरसेनो नाम राजासीत्। स सुतनिर्विशेषं प्रकृतीः (१) पालयन् (२) सुखेन कालं निनाय। सुमतिर्नाम तस्य मन्त्री (३)। नृपति-स्तस्मिन्नत्यर्थं प्रीतिमानासीत् (४)। तस्य सचिवस्य ईश्वरे परमा प्रीति (५) र्बभूव। जगतीह नक्तन्दिवं (६) यत् किञ्चित् घटते (७) तत् सर्व्वमेव शुभाय इत्येव तस्य बुद्धिरासीत्। शुभं वाप्यशुभं किञ्चित् धीरस्यास्य चित्तं विकलयितुं (८) न प्रभवतिस्म। विधातृविहितं सर्व्वं स मङ्गलाय एव मन्यते (९) स्म। भगवता विधात्रा यदेव विधीयते तत् सर्व्वमेव शुभाय इति स सर्व्वदैवाकथयत्। नृपतिरपि तस्य प्रमुखा-दनिशम् (१०) एवमाकर्णयन् कदाचिदचिन्तयत् (११) अहो किमप्येनं वीतधैर्य्यं (१२) कर्त्तुं नालं, भवतु तावत्, अहमस्य धैर्य्यं परीक्षिष्ये।

---

(१) प्रजाः। (२) वर्त्तयन्। (३) वर्त्तत इति शेषः। (४) प्रीति-र्विद्यते यस्य प्रीतिमान् सन्तोषयुक्तः। (५) विश्वासः। (६) अहर्निशम्। (७) उपतिष्ठते। (८) चञ्चलीकर्त्तुम्। (९) जानाति। (१०) नियतम्। (११) अनुध्यातवान्। (१२) धैर्य्यच्युतम्।

अथ दैवेन नृपतेरङ्गुल्यां स्फोटकः सञ्जातः। तेन स अत्यर्थं क्लिश्यमानो मन्त्रिणमेवं (१३) विज्ञापय (१४) इति आदिश्य कञ्चित् दूतं प्रेरितवान्। सचिवस्तस्य प्रमुखतः प्रवृत्तिम् (१५) एतामासाद्य स्वभावधीरतया भगवता विधात्रा यदेव विधीयते तदेव शुभाय इति प्रतिभाषणं (१६) प्रेषयामास। नृपतिस्तदवगमात् (१७) कोपस्फुरितलोचनोऽवदत् अहो धिगिमं जाल्मं (१८); यत् क्लिष्टमपि मां नानुकम्पते (१९), तस्येदमौदासीन्यं (२०) न मया कदापि सोढव्यम्।

अथ कदाचित् पीड़यास्याङ्गुली स्खलिता बभूव। राजा च भूयसा (२१) क्लेशेन संशयितजीवितः (२२) अभवत्, मन्त्रिणं ज्ञापयेत्यादिश्य भूयः (२३) कञ्चित् दूतं प्रेरितवांश्च। सचिवोऽपि निशम्यैतत्, भगवता विधात्रा यदेव विधीयते तदेव शुभाय, इति प्रतिवचनं ददौ। नृपतिरपि श्रुत्वैतत्(२४)अचिन्तयत्, स्वस्थश्चेत् नूनमेनं हनिष्यामि।

---

(१३) स्फोटकजननप्रकारम्। (१४) बोधय। (१५) वार्त्ताम्। (१६) प्रत्युत्तरम्। (१७) मन्त्रिवाक्यश्रवणात्। (१८) असमीक्ष्यकारिणम्। (१९) दयते। (२०) सारल्यं विधात्रनुष्ठितं शुभायेत्येवं प्रकारं। (२१) महता। (२२) मृतप्रायः। (२३) पुनरपि। (२४) सन्देशं।

अथ दिष्ट्या (२५) स रोगात् निर्म्मुक्तो बभूव। गतेषु दिनेषु असौ सद: समेत्य प्रजानामानन्दं वर्धयामास। सचिवोऽपि राजसकाशमागत्य यथाविधि तमभिननन्द (२६)। नृपतिस्तु न मधुरवाचा तं पुन: सम्भाषयामास (२७)।

अथैकदा राजा मृगयायै (२८) यातुकामो (२९) मन्त्रिणं प्राह, भो मन्त्रिन्! यथारीति मृगयागमनोद्योगं विधेहि। सोऽपि च देवपादा यथाज्ञापयन्ति, इत्युक्त्वा सर्व्वमेवानुष्ठितवान्। तत: स नृपतिरश्वमारुह्य बहुभिर्लोकैरनुगम्यमानो (३०) मन्त्रिणा सह प्रतस्थे। निविड़काननाभ्यन्तरमासाद्य अनुचरान् सर्व्वानादिदेश, युष्माकं दूरमनुसरणेनालं, मन्त्रिणानुगतोऽहं दूरतरवनमध्यम् (३१) अवगाहिष्ये, भवन्तश्च सायं यावत् मे प्रत्यावर्त्तनमपेक्ष्य गृहं प्रति निवर्त्तन्ताम्।

ततो राजा मन्त्री च अश्वमारुह्य द्रुतं गभीरवनमध्यं प्रविविश। सहसा कूपमेकमालोक्य नृपतिरचिन्तयत्, अवसरो (३२) ऽयं सम्यगस्माकं सङ्कल्पसिद्धे:,

---

(२५) भाग्येन। (२६) सम्मानितवान्। (२७) प्रत्युत्तरं ददौ। (२८) मृगविनाशार्थम्। (२९) गन्तुमिच्छु: यातुं कामो यस्येति। (३०) अन्वीयमान:। (३१) दूरवर्त्तिकाननान्तरालम्। (३२) समय:।

(३३) तृष्णाव्याजम् (३४) अवलम्ब्य जलानयनार्थं (३५) मन्त्रिणमादिशामि, कूपसन्निहितञ्चैनं कूपमध्ये पातयामि (३६), इत्यवधार्य्य मन्त्रिणं प्राह, सुमते! महती मे तृष्णा जाता, नाहं दूरतरं गन्तुं शक्नोमि (३७) कूपोऽयमारात् (३८) दृश्यते (३९), पश्य तत्र जलमस्ति न वा। मन्त्री नृपतेराज्ञया कूपसन्निधिं गत्वा नततुण्डः (४०) यावत् जलं निरीक्षते तावद्राजा झटिति पृष्ठतस्तं कूपे निचिक्षेप। सचिवोऽसौ पतन्नेव, भगवता विधात्रा यदेव विधीयते तदेव शुभाय, इत्युक्त्वा कूपमध्ये पपात। राजापि विहस्त-वदनस्तूर्णं ततः प्रतस्थे।

तदा सन्ध्या समागतासीत्। भगवान् काश्यपेयः (४१) स्वीयमयूखान् (४२) संहृत्य अस्ताचलशिखरा-रोहणोन्मुखो बभूव। दिनकरविरहेण (४३) सन्ता-पितचित्ता धरणी (४४) तमोवसनं पिनह्येव वयसां (४५) रुतव्याजेन मानसीं व्यथां प्रकटयामास

(३३) अभिलषितसम्पादनस्य, मन्त्रिविनाशरूपस्येति यावत्। (३४) पिपासाच्छलम्। (३५) जलस्य आनयनं तस्मै अयं अर्थेन सह नित्य-समासः। (३६) क्षिपामि। (३७) पारयामि। (३८) समीपे। (३९) मयेति शेषः। (४०) अवनतमुखः।

(४१) सूर्य्यः। (४२) स्वस्येमे स्वीयाः मयूखाश्च तान्। (४३) प्रिय-कृतेनेति भावः। (४४) सूर्य्यप्रिया इति भावः। (४५) पक्षिणां।

(४६)। श्वापदाः (४७) सर्व्वे प्रहृष्टमनसो विवरात् (४८) निष्क्रम्य समन्तात् परिधावितुमारेभिरे (४९)। नृपतिर्न कथञ्चित् वनपथात् वहिरायातुमसमर्थः सन्निहितं वृक्षमेकमारुह्य अवतस्थे। अश्वोऽपि तदधस्तात्तस्थौ।

अथ निशीथसमयः (५०) सम्भूतः। सहसा वनभागं प्रकम्पयन्निव तत्रैव महान् कोलाहलः (५१) समुत्थितः। नरपतिस्तु कश्चिदतर्किंतो (५२) विपत्पात आपतितो (५३) ऽयमिति मत्वा यावत् पश्यति तावदारात् (५४) समागच्छतो बहून् लोकानवलोकयामास। तेऽपि शनैःशनैः (५५) वृक्षाभ्यासं (५६) एत्य सज्जिततुरङ्ग (५७) मेकमालोक्य परस्परं कथयामासुः, सिद्धमेव साम्प्रतमस्माकमभिलाषमिति। तुरङ्गमेन मानवसमागमोऽत्रेति संसूचयति (५८)।

---

(४६) यथा काचित् अङ्गना प्रियविरहेण सन्तप्तचित्ता सती मलिनवसनं परिधाय रोदनेन मनःपीड़ां प्रकाशयति तथेति अप्रस्तुतपतिविरहित-नारीप्रतीतेः समासोक्तिरलङ्कारः। (४७) हिंस्राः व्याघ्रादय इति यावत्। (४८) गर्त्तात्। (४९) प्रवृत्ताः। (५०) अर्द्धरात्रकालः। (५१) कलकल-ध्वनिविशेषः। (५२) अनालोचितः असम्भावित इति यावत्।

(५३) आगत उपस्थित इति यावत्। (५४) समीपे। (५५) मन्दं मन्दम्। (५६) पादपनिकटम्। (५७) सज्जः संजातोऽस्य सज्जितः तुरं वेगं गच्छतीति तुरङ्गः। (५८) धूमदर्शनेन वह्न्यनुमानवत् सज्जिततुरङ्गम-

इदानीमेनमनुसन्धाय राजसकाशं नेष्यामः। अस्माकं नृपतिरपि श्वः (५९) प्रातश्चामुण्डायै वलिमुपहारीकृत्य सिद्धकामो भविष्यति।

इत्याकर्ण्य नृपतिर्वृक्षारूढ़ः संचाहीन इव पत्रान्तरालमध्यवर्त्ती तस्थौ। सहसा तेषामेकतमो वृक्षेऽस्मिन् मानवो दृश्यते मानवो दृश्यते इत्युच्चैरपरान् ज्ञापयामास। तत्क्षणमेव केचित् वृक्षमारुह्य राजानं बद्धा वृक्षात् तस्मादवतेरुः।

अथैनमश्वमारोप्य विजयगीतिं गायन्तः सर्वे यथा-गतं चलिताः। राजा च आत्मकर्म्मफलानुरूप (६०) मेतदिति विज्ञाय स्थाणुवत् (६१) तस्थौ। ते च तेषां नृपतिमुपागम्य आसादितो (६२) ऽयं वलिरिति निवेदयामासुः। राजा च एनं कारागृहे (६३) स्थापयेत्यादिश्य चामुण्डामन्दिरं ययौ।

अथ क्रमेण निशावसानमभूत्। ढक्कादुन्दुभि-पटहनिनादैर्नृपभवनमचिरेण पूर्णमभवत्। समीरणैः समन्ततः सञ्चाल्यमानैः रक्तध्वजैः (६४) उपशोभितं

---

दर्शनेन मनुष्यागमनमनुमानं जायते इति भावः। (५९) आगामि दिवसे।

(६०) सन्निनिक्षेपनिजकार्य्यफलसदृशम्। (६१) शाखापल्लवहीननिश्चल-वृक्ष इव। (६२) प्राप्तः। (६३) बन्धनालये। (६४) रक्तवर्णपताकाभिः।

देवीमन्दिरं बभूव। राजा च परिहितरक्तवसनो रक्तचन्दनानुलिप्तो रक्तमाल्योपशोभितो मातश्चामुण्डे! प्रसीद प्रसीद, बलिमिमं गृहाणेति कथयन् यावत् देव्याः पुरतो वन्दिनं राजानं संस्थाप्य तस्यावयवं (६५) निरीक्षाञ्चक्रे तावत्तमङ्गुष्ठेन (६६) हीनमालोक्य आः पापाः! किमिदं (६७) हीनाङ्गुष्ठं नरमिमं कथं बलिरूपेण चामुण्डायै दास्यामि इति कथयित्वा तं दूरीचकार, पूर्णावयवमन्यमेकमानेतुमादिदेश। नृपतिरयं दिष्ट्या प्राणान् प्राप्य पलायाञ्चक्रे।

अथ स काननमासाद्य चिन्तयामास, अहो यदेव सचिवेनोक्तं सत्यमेव तावत् सर्वं, भगवता विधात्रा यदेव विधीयते तदेव शुभाय, इति मयाद्य सम्यक् परीक्षितं, अङ्गुष्ठहीनात् नूनमद्य स मां नाहनिष्यत्, अहो कुत्र स मे मन्त्री, कुत्र स मे भगवत्परायणो (६८) धार्म्मिककुलशेखरो विवेकचूड़ामणिर्म्ममैकबन्धुः (६९)।

---

(६५) हस्तपदादिकम्। (६६) वृद्धाङ्गुल्या। (६७) बल्यर्थमस्यानयनं किं किमर्थं विफलमिति यावत्। असम्पूर्णावयवत्वेन बल्ययोग्यतया एतदानयने युष्माकं विफलप्रयास इति भावः।

(६८) भगवानेव परं प्रधानं अयनं आश्रयस्थानं यस्य सः।

(६९) अत्यन्तसम्भ्रमात् मे ममेति च एतद्द्वयोपन्यासः न दूषणावहः। अथवा मे इति अनादरे षष्ठी मे मां राजानमपि अनादृत्य भगवत्परायण इत्यर्थः।

धिक् मां यदहं कारणमन्तरेण तं हतवान्। किं अद्यापि स जीवति। भवतु, गत्वा तत्र द्रक्ष्यामि तावदवधार्य्यं स लघुपदं तत्कूपसन्निधा (७०) वागत्य धार्म्मिकप्रवर! सुमते! ममैकप्रियबन्धो! सचिवराज! किमद्यापि जीवसि? देहि मे प्रतिवचनम्, इत्युच्चै- स्तमाजुहाव। नृपतेर्वचः श्रुत्वा मन्त्री कूपादतीवार्त्त- स्वरेण (७१) प्रोवाच, महाराज! मृतकल्पो- (७२) ऽत्र तिष्ठामि, यदीच्छसि मामुद्धर।

ततो नृपतिस्तूर्णं तं कूपादुज्जहार। बारशः (७३) चात्मदोषं स्वीकृत्य क्षमस्वेति भूयश्चानुनीय मन्त्रिणं प्रसादयामास। मन्त्रिणोक्तं, महाराज! किमिदं किमेवं कथयसि, किमापतितं भवतां देवपादानां, कथमीदृशीमवस्थामापन्नोऽसि, कथं हि ते दृष्टिरियं सकातरा वर्त्तते।

ततो राजा प्राह, मन्त्रिन्! सत्यमुक्तं भवता, भगवता विधात्रा यदेव विधीयते तदेव शुभाय, इत्यत्र नास्ति मे कश्चित् सन्देहः। इत्युक्त्वा तस्मादितो यत् वृत्तं (७४) तत् सर्वं कथयामास। तदाकर्ण्य मन्त्री

---

(७०) अधिकरणविवक्षायां सप्तमी।

(७१) कातरध्वनिना। (७२) प्रेततुल्यः

(७३) बहुवारम्। (७४) भूतम्।

किञ्चित् विहस्य प्रोवाच, महाराज! ममापि कूपे निक्षेपो भगवता अनुमोदित एव। क्षीणाङ्गस्य भवतो मुक्तिश्चेदपि त्वदनुषङ्गिनः पूर्णावयवस्य ममैव परित्राणं न कथमप्यभविष्यत्। अतो ज्ञायतामेतत् देवपादैर्यत् भगवता विधात्रा यत् विधीयते तदेव शुभाय। ततस्तौ परस्परं प्रीतौ स्वराज्यं प्रतिनिवृत्तौ।

———

## पञ्चतन्त्रम्।

अस्ति कस्मिंश्चिद्देशे मठायतनम् (१)। तत्र देवशर्म्मा नाम परिव्राजकः (२) प्रतिवसति स्म। तस्य अनेकयजमान-प्रदत्त-सूक्ष्मवस्त्र-विक्रयवशात् कालेन महती वित्तमात्रा (३) सञ्जाता। ततः स न कस्यचित् विश्वसिति (४) नक्तन्दिवं कक्षान्तरात् तां न मुञ्चति। अथवा साधु चेदमुच्यते—

अर्थानामर्जने दुःखमर्जितानाञ्च रक्षणे।
नाशे दुःखं व्यये दुःखं धिगर्थं दुःखभाजनम्॥

---

(१) छात्राणां वासस्थानः, मठश्छात्रादिनिलय इत्यमरः।

(२) यः सर्व्वकर्म्माणि परित्यज्य व्रजति, भिक्षुः, यतिः।

(३) वित्तस्य, धनस्य, मीयतेऽनया इति मात्रा परिमाणसाधनं, पात्रमित्यर्थः, (वेटुया इति भाषा)। यद्वा मां लक्ष्मीं त्रायते इति व्युत्पत्त्या मात्रापदं सिद्धम्, धनाधारत्वात् लक्ष्मीनिवासस्थानमिति मन्यते।

(४) प्रत्येति न कोऽपि तस्य विश्वासपात्रमासीदित्यर्थः।

अथ आषाढ़भूतिः (५) नाम परवित्तापहारी धूर्त्तः अर्थमात्रां तस्य कक्षान्तर्गतां लक्षयित्वा व्यचिन्तयत्; कथं मयास्येयमर्थमात्रा हर्त्तव्येति। अत्र तावत् मठे दृढ़शिलासञ्चयवशात् भित्तिभेदः (६) न भवति। उच्चैस्तरत्वाच्च द्वारे प्रवेशो न स्यात्। तदेनं मायावचनैः (७) विश्वास्याहं छात्रतां व्रजामि, येन विश्वस्तो भवति। एवं निश्चित्य तस्यान्तिकमुपगम्य 'ओं नमः शिवाय' इति ब्रुवाणः साष्टाङ्गं (८) प्रणम्य च सप्रश्रयम् (९) उवाच, भगवन्! असारोऽयं संसारः। तृणाग्निसमं जीवितम् (१०)। अभ्रच्छायासदृशाः (११) भोगाः। स्वप्नसदृशः (१२) पुत्रकलत्रमित्रवर्गसम्बन्धः। एत (१३) न्मया सम्यक् परि-

---

(५) आषाढ़ः पालाशदण्डः भूतिः सम्पत्तिर्यस्य सः, आषाढधर इत्यर्थः।

(६) सन्धिखननादिना भित्तिभेद इति यावत्। (७) कपटवाक्यैः।

(८) जानुभ्याञ्च तथा पद्भ्यां पाणिभ्यामुरसा धिया।
शिरसा वचसा दृष्ट्या प्रणामोऽष्टाङ्ग ईरितः॥

(९) सविनयम्। (१०) तृणाग्निवत् जीवनं क्षणस्थायीत्यर्थः।

(११) मेघच्छायातुल्याः। वियति मेघविवर्त्तनात् भुवि या छाया पतति तद्वत् अस्थिरा इति भावः।

(१२) स्वप्नदर्शनवत् अलीक इत्यर्थः।

(१३) प्रागुक्तं सर्व्वं संसारनिःसारतादिकं सामान्यत्वात् नपुंसकम्।

जातम् (१४)। तत् किं कुर्वतो मे संसारसमुद्रोत्तरणं भविष्यति (१५)?

तच्छ्रुत्वादेवशर्म्मा सादरमाह, वत्स! धन्योऽसि त्वं यत् प्रथमे वयस्येवं विरक्तभावः। उक्तञ्च,

पूर्व्वे वयसि (१६) यः शान्तः स शान्त इति मे मतिः।
धातुषु (१७) क्षीयमाणेषु शमः कस्य न जायते॥

तच्छ्रुत्वा (१८) आषाढ़भूतिस्तत्पादौ गृहीत्वा सप्रश्रयम् इदमुवाच, भगवन्! तर्हि व्रतप्रदानेन (१९) मम प्रसादः (२०) क्रियताम्। देवशर्म्मा प्राह, वत्स, अनुग्रहं ते करिष्यामि, परं रात्रौ त्वया मठमध्ये न प्रवेष्टव्यम्; यतो निःसङ्गता (२१) यतीनां प्रशस्यते।

---

(१४) सर्व्वथा वैराग्यं मे जातमिति तात्पर्य्यम्।

(१५) यस्मिन्नुपाये अवलम्बिते मम परित्राणं भविष्यति तं त्वमुपदिश इति भावः।

(१६) यौवने इत्यर्थः।

(१७) देहस्थेषु शुक्रशोणितादिषु। क्षीयमाणेषु दुर्ब्बलतां भजत्सु सत्स्वित्यर्थः। वृद्धानां हि वैराग्यं प्रकृतिसिद्धं यूनान्तु तत्त्वज्ञानमूलकमितिभावः।

(१८) परिव्राजकवचनमाकर्ण्य। (१९) धर्म्मोपदेशेन।

(२०) अनुग्रहः। व्रतमुपदिश्य मयि प्रसीदेत्यर्थः।

(२१ सङ्गवासराहित्यम्। तदुक्तं सङ्गः सर्व्वात्मना त्याज्य इति।

तत् त्वया व्रतग्रहादूर्द्ध (२२) मठद्वारे तृणकुटीरके शयितव्यमिति (२३)। स चाह, भगवन्! भवदादेशः प्रमाणम् (२४)।

अथ तं देवशर्म्मा अनुग्रहं दत्त्वा शास्त्रोक्तविधानेन शिष्यतामनयत् (२५)। सोऽपि विविधपरिचर्य्यया तं परं परितोषमनयत् (२६)। पुनस्तथापि मुनिः कक्षान्तरान्मात्रां न मुञ्चति।

अथैवं गच्छति काले आषाढ़भूतिश्चिन्तयामास, अहो न कथञ्चिदप्येष मे विश्वासमागच्छति (२७)। तत् किं दिवापि शस्त्रेण मारयामि, (२८) किं वा विषं प्रयच्छामि, किं वा पशुधर्म्मेण(२९) व्यापादयामि एवं चिन्तयतस्तस्य, देवशर्म्मणोऽपि शिष्यपुत्रः कश्चिद्

---

(२२) अनन्तरं, परमिति यावत्।

(२३) तस्य अर्थमात्रापहरणशङ्कया एतदुक्तं यतिनेति भावः।

(२४) मया प्रमाणीक्रियते इत्यर्थः। भवदाज्ञा अवश्यं पालनीयेति भावः।

(२५) प्रापयामास तं शिष्यं चकार इत्यर्थः।

(२६) तस्य परां प्रीतिमुत्पादयामास इत्यर्थः।

(२७) न मां विश्वसितीत्यर्थः।

(२८) व्यापादयामि।

(२९) पशूनां सिंहव्याघ्रादीनां धर्म्मः वधप्रकारस्तेन, दन्तपदादिना इत्यर्थः।

ग्रामादामन्त्रणार्थं समायातः; प्राह च, भगवन्! पवित्रारोपणविषये (३०) मम गृहमागम्यतामिति। तच्छ्रुत्वा देवशर्म्मा आषाढ़भूतिना सह प्रहृष्टमनाः प्रस्थितः। अथैवं तस्य गच्छतोऽग्रे काचिन्नदी समायाता। तां दृष्ट्वा मात्रां कन्थान्तरादवतार्य्य कन्थामध्ये सुगुप्तां निधाय आषाढ़भूतिमिदमाह, आषाढ़भूते! यावदहं स्नात्वा देवार्च्चनं विधाय च समागच्छामि तावदेषा कन्था योगेश्वरस्य (३१) सावधानतया रक्षणीया, इत्युक्त्वा गतः। आषाढ़-भूतिरपि तस्मिन्नदर्शनीभूते (३२) मात्रामादाय सत्वरं प्रस्थितः।

देवशर्म्मापि छात्रगुणानुरञ्जितमनाः (३३) सुवि-श्वस्तो निर्वर्त्तितव्यापारः शनैः शनैर्यावदागच्छति तावदाषाढ़भूतिं न पश्यति। ततश्च औत्सुक्येन (३४) यावत् कन्थामालोकयति तावन्मात्रा नास्ति। ततश्च

---

(३०) पवित्रस्य यज्ञोपवीतस्य आरोपणं विष्णवे समर्पणम्। श्रावण-शुक्लद्वादश्यां विष्णुविग्रहे यज्ञोपवीतदानरूपे उत्सवे।

(३१) विष्णोः। (३२) चक्षुर्विषयमतिक्रान्ते।

(३३) छात्रस्य शिष्यस्य आषाढ़भूतेः गुणैः विनयार्जवादिभिः अनुरञ्जितं परितोषितं मनो यस्य स तथोक्तः।

(३४) उत्कण्ठया।

'हाहा मुष्टोऽस्मि' (२५) इति जल्पन् भूतले मूर्च्छया निपपात। तत्क्षणात् चेतनां लब्ध्वा भूयोऽपि समुत्थाय फुत्कर्त्तुमारब्ध—"भो भो आषाढ़भूते! मां वञ्चयित्वा क्व गतोऽसि? तद्देहि मे प्रतिवचनम्।" एवं बहुविधं (२६) विलप्य तस्य पादपद्धतिम् (२७) अन्वेषयन् शनैः शनैः प्रस्थितः।

---

## हितोपदेशः।

अस्ति मगधदेशे (१) चम्पकवती (२) नामारण्यानी (३)। तस्यां चिरान्महता स्नेहेन (४) मृगकाकौ निवसतः। स च मृगः स्वेच्छया भ्राम्यन् हृष्टपुष्टाङ्गः (५) केनचित् शृगालेनावलोकितः। तं दृष्ट्वा

---

(२५) मुषितोऽस्मि, अपहृतवित्तमात्रोऽस्मीत्यर्थः। मुष्ट इति पदं निपातनात् सिद्धम्।

(२६) बह्वी विधा प्रकारो यत्र कर्म्मणि तं नानावचनविन्यासमित्यर्थः।

(२७) पदपङ्क्तिं पदचिह्नितमिति यावत्।

(१) विहार इति नामधेये जनपदे।

(२) चम्पकाः चम्पकवृक्षाः सन्ति अस्याम्।

(३) अरण्यानी महारण्यमिति।

(४) प्रणयेन उपलक्षितौ उपलक्षणे तृतीया।

(५) हृष्टं मुग्धं पुष्टं स्थूलं अङ्गं कायो यस्य स तथोक्तः।

शृगालोऽचिन्तयत्, आः कथमेतन्मांसं सुललितं (६) भक्षयामि ? भवतु, विश्वासं तावदुत्पादयामि । इत्यालोच्य उपसृत्य (७) अब्रवीत्, मित्र ! कुशलं ते ? मृगेणोक्तं, कस्त्वम् ? स ब्रूते, क्षुद्रबुद्धिनामा जम्बुकोऽहम् अत्रारण्ये बन्धुहीनो मृतवन्निवसामि, इदानीं त्वां मित्रमासाद्य पुनः सबन्धुर्जीवलोकं (८) प्रविष्टोऽस्मि (९)। अधुना तवानुचरेण मया सर्वथा भवितव्यमिति । मृगेणोक्तम्, एवमस्तु (१०)।

ततः पश्चादस्तं गते सवितरि भगवति (११) मरीचिमालिनि (१२) तौ मृगस्य वासभूमिं गतौ । तत्र चम्पकवृक्षशाखायां सुबुद्धिनामा काको मृगस्य चिरमित्रं निवसति । तौ दृष्ट्वा काकोऽवदत्, सखे ! कोऽयं द्वितीयः ? मृगो ब्रूते, जम्बुकोऽयमस्मत्सख्यमिच्छन्नागत। काको ब्रूते, मित्र ! अकस्मादागन्तुना (१३) सह मैत्री न युक्ता । तथाचोक्तम् ।

---

(६) अतिमधुरम् ।

(७) उपगम्य, तस्य समीपं गत्वेति यावत् । (८) संसारमित्यर्थः ।

(९) अधुना त्वां मित्रं लब्ध्वा जीवितोऽस्मीति भावः ।

(१०) तव मनोरथसिद्धिर्भवतु इति भावः ।

(११) ऐश्वर्यशालिनि ।

(१२) मरीचिनां माला समूहः विद्यते अस्य तस्मिन् ।

(१३) आगन्तुना अचिरागतेन अपरिचितेन जनेनेति यावत् ।

अज्ञातकुलशीलस्य (१४) वासो देयो (१५) न कस्यचित् ।
मार्ज्जारस्य हि दोषेण हतो गृध्रो जरद्गवः ॥

तावाहतुः, कथमेतत् ? काकः कथयति । अस्ति भागीरथीतीरे गृध्रकूटनाम्नि (१६) पर्व्वते महान् पर्कटो (१७) वृक्षः । तस्य कोटरे दैवदुर्व्विपाकात् (१८) गलितनखनयनो जरद्गवनामा (१९) वृद्धो गृध्रः प्रतिवसति । अथ कृपया तज्जीवनाय तद्वृक्षवासिनः पक्षिणः स्वाहारात् किञ्चिदुद्धृत्य ददति, तेनासौ जीवति ।

अथ कदाचित् दीर्घकर्णनामा मार्ज्जारः पक्षिशावकान् भक्षयितुं तत्रागतः । ततस्तमायान्तं दृष्ट्वा पक्षिशावकैर्भयार्त्तैः कोलाहलः कृतः । तं श्रुत्वा जरद्गवेनोक्तं, कोऽयमायाति ? दीर्घकर्णो गृध्रमवलोक्य सभयमाह, हा हतोऽस्मि (२०) । अथवा,

---

(१४) कुलञ्च शीलञ्च कुलशीले अज्ञाते कुलशीले यस्य, तस्य ।

(१५) केनापीति कर्त्तृपदमध्याहर्त्तव्यम् । दृष्टान्तेन दृढं द्रढयति मार्ज्जारेति ।

(१६) गृध्राः कूटे शृङ्गे यस्य सः नाम यस्य तस्मिन् ।

(१७) पाकुड़ इति ख्यातः । (१८) भाग्यविपर्य्ययात् ।

(१९) जरन्तः जीर्णाः गावः पक्षतयो यस्य सः तन्नामा ।

(२०) गृध्रेणाहमिति शेषः । स प्रतिदुष्टबुद्धिवलेन नीतिं स्मरन्नाह अथवेति ।

तावद्भयस्य (२१) भेतव्यं यावद्भयमनागतम्।
आगतन्तु भयं वीक्ष्य प्रतिकुर्य्यात् यथोचितम्॥

अधुना सन्निधाने (२२) पलायितुमक्षमः। भवतु तावद्विश्वासमुत्पाद्य अस्य समीपमुपगच्छामि। इत्यालोच्य उपसृत्याब्रवीत्, आर्य्य! त्वामभिवन्दे। गृध्रोऽवदत्, कस्त्वम्? सोऽवदत्, मार्ज्जारोऽहम्। गृध्रो ब्रूते, दूरमपसर, नो चेद्धन्तव्योऽसि मया। मार्ज्जारोऽवदत्, श्रूयतां तावन्मम वचनम्। ततो यद्यहं वध्यस्तदा हन्तव्यः।

जातिमात्रेण किं कश्चिद्धन्यते पूज्यते क्वचित्।
व्यवहारं परिज्ञाय बध्यः पूज्योऽथवा भवेत् (२३)॥

गृध्रो ब्रूते, ब्रूहि किमर्थमागतोऽसि। सोऽवदत्, अहमत्र गङ्गातीरे नित्यस्नायी निरामिषाशी ब्रह्मचारी (२४) चान्द्रायणव्रतमाचरंस्तिष्ठामि। यूयं धर्म्मज्ञानरता विश्वासभूमय इति पक्षिणः सर्वे सर्वदा ममाग्रे प्रस्तुवन्ति (२५)। अतो भवद्भ्यो विद्यावयो-

(२१) भयस्य भयात्, सम्बन्धविवक्षया षष्ठी।

(२२) अरक्षवस्येति शेषः।

(२३) जगति व्यवहारानुसारेण बध्यपूज्यविधिः न तु जातेः उत्कर्षापकर्षाधीन इति भावः।

(२४) उपनयात् परं गुरुगृहे यो नियतात्मा वेदमधीते स ब्रह्मचारी।

(२५) वर्णयन्ति प्रशंसन्तीति भावः।

युष्मभ्यो धर्म्मं श्रोतुमिहागतः। भवन्तश्चैतादृशा धर्म्मज्ञाः यन्मामतिथिं हन्तुमुद्यताः। गृहस्थधर्म्मश्चैषः,

> अरावप्युचितं कार्य्यमातिथ्यं गृहमागते।
> छेत्तुः पार्श्वगता (२६) च्छायां नोपसंहरति द्रुमः॥

यदि वा धनं नास्ति तदा प्रीतिवचसाप्यतिथिः पूज्यत एव। यतः,

> तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता (२७)।
> एतान्यपि सतां गेहे नोच्छिद्यन्ते (२८) कदाचन॥

अन्यच्च

> उत्तमस्यापि वर्णस्य नीचोऽपि गृहमागतः।
> पूजनीयो यथायोग्यं सर्व्वदेवमयोऽतिथिः॥
> अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते।
> स तस्मै दुष्कृतं दत्वा पुण्यमादाय गच्छति॥

गृध्रोऽवदत् मार्ज्जारा हि मांसरुचयः, पक्षिशावकाश्चात्र निवसन्ति, तेनाहं ब्रवीमि। तत् श्रुत्वा मार्ज्जारो भूमिं स्पृष्ट्वा कर्णौ स्पृशति, ब्रूते च मया

---

(२६) पार्श्ववर्त्तिनः।

(२७) सूनृता सत्या प्रिया वा मधुरसम्भाषणमिति यावत्। तृणानि तृणनिर्म्मितमासनम्, भूमिः विश्रामार्थं स्थानम्, उदकं पादप्रक्षालनार्थं जलम्।

(२८) न उच्छिद्यन्ते न प्रत्यादिश्यन्ते अन्नाभावे आसनादिदानेनापि अतिथिसत्कारः कर्त्तव्य इत्यर्थः।

धर्म्मशास्त्रं श्रुत्वा वीतरागेणेदं (२९) दुष्करं व्रतं चान्द्रायणमध्यवसितम् (३०)। यतः परस्परं विवदमानानामपि धर्म्मशास्त्राणाम् अहिंसा परमो धर्म्म इत्यत्रैकमत्यम्।

सर्वहिंसानिवृत्ता ये नराः सर्वंसहाश्च (३१) ये।
सर्वस्याश्रयभूताश्च ते नराः स्वर्गगामिनः॥
एक एव सुहृद्धर्म्मो निधनेऽप्यनुयाति यः।
शरीरेण समं नाशं सर्वमन्यत्तु गच्छति॥
योऽत्ति यस्य यदा मांसमुभयोः पश्यतान्तरम्।
एकस्य क्षणिका प्रीतिरन्यः प्राणैर्विमुच्यते॥
स्वच्छन्दवनजातेन शाकेनापि प्रपूर्य्यते (३२)।
अस्य दग्धोदरस्यार्थे कः कुर्य्यात्पातकं महत्॥

एवं विश्वास्य स मार्ज्जारस्तरुकोटरे स्थितः। ततोऽसौ दिनेषु गच्छत्सु पक्षिशावकानाक्रम्य कोटरमानीय प्रत्यहं खादति। येषामपत्यानि खादितानि तैः शोकार्त्तैर्विलपद्भिरितस्ततो जिज्ञासा समारब्धा। तत् परिज्ञाय मार्ज्जारः कोटरान्निःसृत्य बहिः पलायितः। पश्चात् पक्षिभिरितस्ततो निरूपयद्भिः (३३) तत्र तरुकोटरे शावकास्थीनि प्राप्तानि। अनन्तरं

(२९) वीतरागेण गतस्पृहेण भोग्यवस्तुषु स्पृहाशून्येनेत्यर्थः।
(३०) अनुष्ठितम्।
(३१) क्षमाशीलाः। (३२) उदरमिति शेषः।
(३३) अन्विष्यद्भिः।

अनेनैव जरद्गवेनास्माकं शावकाः खादिता इति सर्वैः पक्षिभिर्निश्चित्य गृध्रो व्यापादितः ।

इत्याकर्ण्य जम्बुकः सकोपमाह, मृगस्य प्रथम-दर्शनदिने भवानप्यज्ञातकुलशील एवासीत् । कथं भवता सह एतस्य स्नेहानुवृत्तिः (२४) उत्तरोत्तरं वर्द्धते ? अथवा,

> यत्र विद्वज्जनो नास्ति श्लाघ्यस्तत्राल्पधीरपि ।
> निरस्तपादपे देशे एरण्डोऽपि द्रुमायते ॥
> अयं निजः परो वेति गणना लघुचेतसाम् ।
> उदारचरितानान्तु वसुधैव कुटुम्बकम् (२५) ॥

यथायं मृगो मम बन्धुस्तथा भवानपि । मृगो-ऽब्रवीत्, किमनेनोत्तरेण (२६) ? सर्व्वैरेकत्र विश्रब्धा-लापैः (२७) सुखमनुभवद्भिः स्थीयताम् । यतः,

> न कश्चित् कस्यचिन्मित्रं न कश्चित् कस्यचिद्रिपुः ।
> व्यवहारेण मित्राणि जायन्ते (२८) रिपवस्तथा ॥

काकेनोक्तमेवमस्तु ।

---

(२४) प्रणयानुरागः ।

(२५) लघुचेतसाम् असारचित्तानाम् । उदारचरितानां महात्मनां पुनर्वसुधा पृथिव्येव कुटुम्बकं कुलम् । तादृशाः पुरुषाः सर्व्वानेव वसुधावासिनो भ्रातॄन् मन्यन्त इत्यर्थः ।

(२६) उत्तरोत्तरवाक्प्रपञ्चेनालमित्यर्थः ।

(२७) विश्वासपूर्णैः, प्रणयगर्भैर्वा सम्भाषैः ।

(२८) उत्पद्यन्ते । मातृगर्भतो निर्गत एव शत्रुः मित्रं वा न भवति सद्व्यवहारेण मित्रं असद्व्यवहारेण शत्रुश्च भवतीत्यर्थः ।

एकदा निभृतं शृगालो ब्रूते, सखे मृग ! अस्मिन् वनकदेशे शस्यपूर्णं क्षेत्रमस्ति । तदहं त्वां नीत्वा दर्शयामि । तथा कृते सति मृगः प्रत्यहं तत्र (३९) गत्वा शस्यं खादति । अथ क्षेत्रपतिना क्षेत्रं दृष्ट्वा पाशो योजितः । अनन्तरं पुनरागतो मृगः पाशैर्बद्धोऽचिन्तयत् को मामितः कालपाशादिव व्याधपाशात् त्रातुं समर्थो मित्रादन्यः । अनन्तरं जम्बुकस्तत्रागत्य उपस्थितोऽचिन्तयत्, फलिता तावदस्माकं कपटप्रबन्धेन (४०) मनोरथसिद्धिः । एतस्योत्कृत्यमानस्य(४१) मांसासृग्लिप्तानि अस्थीनि मयावश्यं प्राप्तव्यानि । तानि च बाहुल्येन भोजनानि भविष्यन्ति । मृगस्तं दृष्ट्वोल्लासितो ब्रूते, सखे ! छिन्धि तावन्मम बन्धनं, सत्वरं त्रायस्व माम् । यतः,

उत्सवे व्यसने चैव दुर्भिक्षे राष्ट्रविप्लवे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥

जम्बुकः पाशं विलोक्याचिन्तयत्, दृढ़स्तावदयं बन्धः । ब्रूते च, सखे ! स्नायुनिर्म्मिताः (४२) पाशाः

---

(३९) क्षेत्रे अधिकरणविवक्षया सप्तमी ।

(४०) छलप्रयोगेण ।

(४१) छिद्यमानस्य चर्मतो निर्म्मोच्यमानस्य इत्यर्थः ।

(४२) स्नायुभिर्देहान्तर्वर्त्तिभिर्नाड़ीविशेषैर्निर्म्मिता घटिताः ।

तदद्य भट्टारकवारे (४३) कथमेतान् दन्तैः स्पृशामि। मित्र! यदि चित्ते नान्यथा मन्यसे तदा प्रभाते यत् त्वया वक्तव्यं तत् कर्त्तव्यमिति।

अनन्तरं स काकः प्रदोषकाले मृगमनागतमवलोक्य इतस्ततोऽन्विष्यन् तथाविधं दृष्ट्वोवाच, सखे! किमेतत्? मृगेणोक्तम्, अवधीरितसुहृद्वाक्यस्य फलमेतत्। तथा चोक्तम्,

सुहृदां हितकामानां यः शृणोति न भाषितम्।
विपत् सन्निहिता तस्य स नरः शत्रुनन्दनः (४४)॥

काको ब्रूते स वञ्चकः क्वास्ते? मृगेणोक्तं, मन्मांसार्थी तिष्ठत्यत्रैव। काको ब्रूते, उक्तमेव मया पूर्व्वम्।

अपराधो न मेऽस्तीति नैतद्विश्वासकारणम्।
विद्यते हि नृशंसेभ्यो भयं गुणवतामपि (४५)॥
परोक्षे कार्य्यहन्तारं प्रत्यक्षे प्रियवादिनम्।
वर्ज्जयेत् तादृशं मित्रं विषकुम्भं पयोमुखम् (४६)॥

---

(४३) रविवारे।

(४४) शत्रूणामानन्दकरः।

(४५) मे मम अपराधो नास्ति अतो मे शत्रुर्नास्तीति शेषः। इत्येतत् न विश्वासकारणम् इत्येवं रूपो विश्वासो न कर्त्तव्य इत्यर्थः। यतः नृशंसेभ्यो गुणवतां निरपराधानामपि भयं विद्यते। नृशंसा हि अपराधं विनापि अन्यं हिंसन्तीति भावः।

(४६) अत इव इतिपदमध्याहार्य्यं पयोमुखं विषकुम्भमिव।

ततः काको दीर्घं निःश्वस्य प्राह, अरे वञ्चक। किं त्वया पापकर्मणा कृतम्?

उपकारिणि विश्रब्धे शुद्धमतौ यः समाचरति पापम्।
तं जनमसत्यसन्धं (४७) भगवति वसुधे। कथं वहसि॥

अथ प्रभाते क्षेत्रपतिर्लगुडहस्तस्तं प्रदेशं गच्छन् काकेनावलोकितः। तमालोक्य काकेनोक्तं, सखे मृग। त्वमात्मनं मृतवत्सन्दर्श्य वातेनोदरं पूरयित्वा पादान् स्तब्धीकृत्य तिष्ठ। अहं तव चक्षुषी चञ्च्वा विलिखामि। यदाहं शब्दं करोमि तदा त्वमुत्थाय सत्वरं पलायिष्यसे। मृगस्तथैव काकवचनेन स्थितः। ततः क्षेत्रपतिना हर्षोत्फुल्ललोचनेन तथाविधो मृग आलोकितः। अथासौ आः स्वयं मृतोऽसि? इत्युक्त्वा मृगं बन्धनान्मोचयित्वा पाशान् ग्रहीतुं सत्वरो बभूव। ततः काकशब्दं श्रुत्वा मृगः सत्वरमुत्थाय पलायितः। तमुद्दिश्य तेन क्षेत्रपतिना क्षिप्तेन लगुडेन शृगालो व्यापादितः। ततः काको लघुपतनकः प्राह,

भक्षितेनापि भवता नाहारो मम पुष्कलः (४८)।
त्वयि जीवति जीवामि चित्रग्रीव इवानघ! (४९)॥

---

(४७) असत्ये वञ्चनायां सन्धा अभिसन्धिर्यस्य तम्।

(४८) प्रभूतं प्रचुर इति यावत्।

(४९) अनघ! निष्पाप! विशुद्धचरित! इति यावत्। हिरण्यक सम्बोधनमेतत्।

हिरण्यको ब्रूते, चपलस्त्वम्, चपलेन सह मैत्री सर्व्वथा न कर्त्तव्या। किञ्चान्यत्। शत्रुपक्षो भवान् अस्माकम्। उक्तञ्च,

> शत्रुणा न हि सन्दध्यात् सुश्लिष्टेनापि सन्धिना।
> सुतप्तमपि पानीयं शमयत्येव पावकम् (५०)॥
> दुर्ज्जनः परिहर्त्तव्यो विद्ययालङ्कृतोऽपि सन्।
> मणिना भूषितः सर्पः किमसौ न भयङ्करः॥

लघुपतनको ब्रूते, श्रुतं मया सर्व्वं तथापि मम चैतावान् सङ्कल्पः, यत् त्वया सह सौहृदमवश्यं करणीयमिति। नो चेदनाहारेणात्मानं तव द्वारि व्यापादयामि। एतद्वचनमाकर्ण्य हिरण्यको वहिर्निःसृत्याह, आप्यायितोऽहं भवतामनेन वचनामृतेन।

> रहस्यभेदो (५१) याच्ञा च नैष्ठुर्य्यं चलचित्तता (५२)।
> क्रोधो निःसत्यता (५३) द्यूतम् (५४) एतन्मित्रस्य दूषणम्॥

एतद्वचनोक्तमेकमपि दूषणं त्वयि न लक्ष्यते। तद्भवतु भवतोऽभिमतमेव। इत्युक्त्वा हिरण्यको मैत्रं

---

(५०) सुश्लिष्टेन सुघटितेन दृढ़ेनेति यावत् सन्धिना, शत्रुणा सह न सन्दध्यात् मिलितो न भवेत्। तथाहि, सुतप्तमपि सन्तापेन शीतलत्वनाशात् क्षीणशक्तिकमपि पानीयं जलं कर्त्तृ पावकं वह्निं शमयति निर्व्वापयति।

(५१) रहस्यं गुप्तमन्त्रणम् तस्य भेदः अन्यसन्निधौ प्रकाशनम्।

(५२) अव्यवस्थितचित्तता।　　(५३) मिथ्यावादिता।

(५४) अक्षादिभिः क्रीड़नम्।

विधाय भोजनविशेषैर्वायसं सन्तोष्य विबरं प्रविष्टः। वायसोऽपि स्वस्थानं गतः। ततः प्रभृति तयोरन्योन्यनाहारप्रदानेन कुशलप्रश्नै र्विश्रम्भालापैश्च कालोऽतिवर्त्तते। एकदा लघुपतनको हिरण्यकमाह, सखे! वायसस्य कष्टलभ्याहारमिदं स्थानम्, एतत् परित्यज्य स्थानान्तरं गन्तुमिच्छामि। हिरण्यको ब्रूते, मित्र! क्व गन्तव्यम्? वायसो ब्रूते, अस्ति सुनिरूपितं स्थानं। हिरण्यकोऽवदत्, किं तत्? वायसो ब्रूते, अस्ति दण्डकारण्ये कर्पूरगौराभिधानं सरः। तत्र चिरकालोपार्ज्जितः प्रियसुहृन्मे मन्थराभिधानः कूर्म्मः सहजधार्म्मिकः प्रतिवसति। स च भोजनविशेषै र्मां संवर्द्धयिष्यति। हिरण्यकोऽप्याह, तत् किमत्रावस्थाय मया कर्त्तव्यम्? मामपि तत्र नय।

अथ वायसस्तेन मित्रेण सह चित्रालापसुखेन तस्य सरसः समीपं जगाम। ततो मन्थरो दूरादेव लघुपतनकमवलोक्योत्थाय यथोचितमातिथ्यं विधाय मूषिकस्याप्यतिथिसत्कारं चकार। वायसोऽवदत्, सखे मन्थर! सविशेषपूजामस्मै विधेहि, यतोयं पुण्यकर्म्मणां धुरीणः (५५) कारुण्यरत्नाकरो हिरण्यक-

(५५) धुरं वहतीति धुरीणः अग्रगण्य इत्यर्थः।

नामा मूषिकराजः । एतस्य गुणस्तुतिं जिह्वासहस्र-द्वयेनापि यदि सर्पराजः कदाचित् कर्त्तुं समर्थः स्यात्। इत्युक्ता चित्रग्रीवोपाख्यानं वर्णितवान् । मन्थरः सादरं हिरण्यकं सम्पूज्याह, भद्र ! आत्मनो निर्जन-वनागमनकारणमाख्यातुमर्हसि । हिरण्यकोऽवदत्, कथयामि, श्रूयताम्—

अस्ति चम्पकाभिधानायां नगर्य्यां परिव्राजकाव-सथः (५६) । तत्र चूड़ाकर्णो नाम परिव्राजकः प्रतिवसति । स च भोजनावशिष्टभिक्षान्नसहितं भिक्षापात्रं नागदन्तकेऽवस्थाप्य स्वपिति । अहञ्च तदन्नमुत्प्लुत्य प्रत्यहं भक्षयामि । अथैकदा तस्य प्रियसुहृद् वीणाकर्णो नाम परिव्राजकः समायातः । तेन सह कथाप्रसङ्गावस्थितो मम त्रासार्थं चूड़ाकर्णो भूमिमताड़यत् । वीणाकर्ण उवाच, सखे ! किमिति मम कथाविरक्तोऽन्यासक्तो भवान् ? चूड़ाकर्ण उवाच, मित्र ! नाहं विरक्तः, किन्तु पश्यायं मूषिको ममापकारी सदा पात्रस्थं भिक्षान्नमुत्प्लुत्य भक्षयति । वीणाकर्णो नागदन्तकं विलोक्याह, कथं मूषिकः स्वल्पबलोऽप्येतावद् दूरमुत्पतति ? तदत्र केनापि

---

५६) अवसथः वासस्थानम् आश्रम इति यावत् ।

कारणेन भवितव्यम्। विचिन्त्य परिव्राजकेनोक्तम्, कारणञ्चात्र धनबाहुल्यमेव प्रतिभाति। यतः,

धनवान् बलवान् लोके सर्व्वः सर्व्वत्र सर्व्वदा।
प्रभुत्वं धनमूलं हि राज्ञामप्युपजायते॥

ततः खनित्रमादाय तेन विवरं खनित्वा चिरसञ्चितं मम धनं गृहीतम्। ततः प्रभृति निजशक्तिहीनः सत्त्वोत्साहरहितः (५७) स्वाहारमप्युत्पादयितुमक्षमः सत्रासं मन्दं मन्दमुपसर्पं चूडाकर्णेनाहमवलोकितः। ततस्तेनोक्तम्,

धनेन बलवान् सर्व्वो धनाद् भवति पण्डितः।
पश्यैष मूषिकः पापः स्वजातिसमतां गतः॥

तच्छ्रुत्वा मयालोचितम्, ममात्रावस्थानमयुक्तमिदानीम्, यच्चान्यस्मै एतद्वृत्तान्तकथनं तदप्यनुचितम्। यतः,

अर्थनाशं मनस्तापं गृहच्छिद्रञ्च मन्त्रणाम्।
वञ्चनञ्चापमानञ्च मतिमान् न प्रकाशयेत्॥

यच्च याञ्चया जीवनं तदप्यतीव गर्हितम्। यतः,

वरं भिक्षाशित्वं (५८) न च परधनास्वादनसुखं
वरं प्राणत्यागो न पुनरधमानामुपगमः (५९)।

---

(५७) सत्त्वं साहसम्, उत्साहः अध्यवसायस्ताभ्यां रहितः। अथवा सत्त्वस्य चित्तस्य उत्साहेन रहितः।

(५८) भिक्षान्नभक्षणम्।

(५९) उपसर्पणम् आनुगत्यमिति यावत्।

वरं वासोऽरण्ये न पुनरविवेकाधिपपुरे
वरं मृत्या ख्याता न च खलु वरो दुष्टश्वपभः ॥

तत् किमहं परपिण्डेनात्मानं पोषयामि ? कष्ट-भोस्तदपि द्वितीयं मृत्युद्वारम् ।

रोगी चिरप्रवासी परान्नभोजी परावसथशायी ।
यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्रामः ॥

इत्यालोच्यापि लोभात् पुनरपि तदीयमन्नं गृहीतं ग्रहम् (६०) अकरवम् । यतः,

लोभेन बुद्धिश्चलति लोभो जनयते तृषाम् (६१) ।
तृषार्त्तो दुःखमाप्नोति परत्रेह च मानवः (६२) ॥

ततोऽहं मन्दं मन्दमुपसर्पंस्तेन वीणाकर्णेन जर्जरवंशखण्डेन ताड़ितोऽचिन्तयम्, लुब्धो ह्यसन्तुष्टो नियतमात्मद्रोही भवति ।

सर्व्वा एवापदस्तस्य यस्य तुष्टं न मानसम् ।
सर्व्वाः सम्पत्तयस्तस्य सन्तुष्टं यस्य मानसम् ॥
सन्तोषामृततृप्तानां यत् सुखं शान्तचेतसाम् ।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् । (६३)
न योजनशतं दूरं बाध्यमानस्य तृष्णया ।
सन्तुष्टस्य करप्राप्तेऽप्यर्थे भवति नादरः ॥

तदत्रावस्थोचितकार्य्यपरिच्छेदः (६४) श्रेयान्

---

(६०) उद्यमम् । (६१) अत्युत्कटाभिलाषाम् ।
(६२) लोभोऽधर्म्ममूलं अधार्मिकस्य उभयलोको नश्यतीति भावः ।
(६३) पर्य्याप्तधनलाभेऽपि न सुखलाभः धनतृष्णाया अनिवृत्तेरितिभावः ।
(६४) अवस्थानुरूपकार्य्यनिर्णयः ।

इत्यालोच्याहं निर्जनवनमागतः। ततोऽस्मत्पुण्योदयादनेन मित्रेणाहं स्नेहानुवृत्त्या अनुगृहीतः, अधुना च पुण्यपरम्परया भवदाश्रयः स्वर्ग एव मया प्राप्तः। यतः,

संसारविषवृक्षस्य द्वे एव मधुरे फले।
काव्यामृतरसास्वादः सङ्गमः सज्जनैः सह॥

मन्थर उवाच, युष्माभिरतिसञ्चयः कृतस्तस्यायं दोषः। उक्तञ्च,

कर्त्तव्यः सञ्चयो नित्यं कर्त्तव्यो नातिसञ्चयः।
पश्य सञ्चयशीलोऽसौ धनुषा जम्बुको हतः॥

तावाहतुः, कथमेतत्? मन्थरः कथयति। अस्ति कल्याणकटके (६५) भैरवो नाम व्याधः। स चैकदा मृगमन्विष्यन् विन्ध्याटवीं गतवान्। ततस्तेन व्यापादितं मृगमादाय गच्छता घोराकृतिः शूकरो दृष्टः। ततस्तेन मृगं भूमौ निधाय शूकरः शरेणाहतः। शूकरेणापि घनघोरगर्ज्जनं (६६) कृत्वा व्याधो हतश्छिन्नद्रुम इव भूमौ पपात। तयोः पादास्फालनेन सर्पोऽपि मृतः; अत्रान्तरे दीर्घरवो नाम जम्बुकः परिभ्रमन्नाहारार्थी तान् मृतान् मृगव्याधसर्पशूक-

---

(६५) कल्याणनाम्नि शिबिरे अद्रिनितम्बे वा।
(६६) मेघभीषणनादम्।

रानपश्यत्, अचिन्तयच्च, अहो! अद्य महद्भोज्यं मे समुपस्थितम्। एषां मांसैर्मासत्रयं मे सुखेन गमिष्यति।

मासमेकं नरो याति, द्वौ मासौ मृगशूकरौ।
अहिरेकं दिनं याति, अद्य भक्ष्यो धनुर्गुणः॥

ततः प्रथममेवेदं निःस्वादं कोदण्डलग्नं (६७) स्नायुबन्धनं (६८) खादामि, इत्युक्त्वा तथाऽकरोत्। ततश्छिन्ने स्नायुबन्धने द्रुतमुत्पतितेन धनुषा हृदि निर्भिन्नः स दीर्घरवः पञ्चत्वं गतः। अतोऽहं ब्रवीमि, कर्त्तव्यः सञ्चयो नित्यमित्यादि। यातु, किमिदानीमतिक्रान्तोपवर्णनेन (६९)? सखे! सर्व्वदा त्वया सोत्साहेन भवितव्यम्। यतः,

उत्साहसम्पन्नमदीर्घसूत्रं (७०)
क्रियाविधिज्ञं (७१) व्यसनेष्वसक्तम् (७२)।
शूरं कृतज्ञं दृढसौहृदञ्च
लक्ष्मीः स्वयं याति निवासहेतोः॥

इति श्रुत्वा लघुपतनको ब्रूते, धन्योऽसि मन्थर! सर्व्वथा श्लाघ्यगुणोऽसि (७३)।

---

(६७) धनुषि आरोपितम्। (६८) शिरानिर्म्मितगुणम्।
(६९) पुरावृत्तकथनेन। (७०) क्षिप्रकारिणम्।
(७१) कर्म्मानुष्ठानाभिज्ञम्। (७२) दोषवर्ज्जितमित्यर्थः।
(७३) सर्व्वदाश्रयणीयोऽसि इति पाठान्तरं।

तदेवं ते स्वेच्छाहारविहारं कुर्व्वाणाः सन्तुष्टाः सुखं निवसन्ति स्म। अथ कदाचिच्चित्राङ्गनामा मृगः केनापि त्रासितस्तत्रागत्य मिलितः। ततः पश्चादायान्तं भयहेतुं सम्भाव्य मन्थरो जलं प्रविष्टः, मूषिकश्च विवरं गतः, काकोऽपि उड्डीय वृक्षमारूढ़ः। ततो लघुपतनकेन सुदूरं निरूप्य भयहेतुर्न कोऽप्यवलोकितः। पश्चात्तद्वचनादागत्य पुनः सर्व्वे मिलित्वा तत्रैवोपविष्टाः। मन्थरेणोक्तम्, भद्र मृग! कुशलं ते? स्वेच्छया उदकाद्याहारोऽनुभूयताम्। अत्रावस्थानेन वनमिदं सनाथीक्रियताम्। (७४)। चित्राङ्गो ब्रूते, लुब्धकत्रासितोऽहं भवतां शरणम् (७५) आगतः भवद्भिः सह सख्यमिच्छामि। हिरण्यकोऽवदत्, मित्रत्वं तावदस्माभिः सह अयत्नेनैव निष्पन्नं भवतः। तदत्र भवता स्वगृहनिर्व्विशेषं (७६) स्थीयताम्।

तच्छ्रुत्वा मृगःसानन्दः कृतस्वेच्छाहारः पानीयं पीत्वा जलासन्नतरुच्छायायामुपविष्टः। अथ मन्थरेणोक्तम्, सखे मृग! केन त्रासितोऽसि? अस्मिन्

---

(७४) पूर्व्वं त्वया विना वनमिदमनाथमासीत्, इदानीमत्रावस्थानेन सस्वामिकं क्रियताम्।

(७५) आश्रयम् आवासभूमिं वा।

(७६) स्वगृहान्नास्ति विशेषो भेदो यत्र तद्यथा निजगृहवदित्यर्थः।

विजने वने कदाचित् किं व्याधाः सञ्चरन्ति? मृगी णोक्तम्, अस्ति कलिङ्गविषये (७७) रुक्माङ्गदो नाम नृपतिः। स च दिग्विजयव्यापारक्रमेणागत्य चन्द्रभागानदीतीरे समावासितकटको (७८) वर्त्तते। प्रातश्च तेनात्रागत्य कर्पूरसरःसमीपे भवितव्यमिति व्याधानां मुखात् किंवदन्ती श्रूयते। तदत्रापि प्रातरवस्थानं भयहेतुरित्यालोच्य यथाकार्य्यं तथारभ्यताम्। तच्छ्रुत्वा कूर्म्मः सभयमाह, मित्र! जलाशयान्तरं गच्छामि। काकमृगावपि उक्तवन्तौ, मित्र! एवमस्तु। हिरण्यको विमृश्याह, पुनर्जलाशये प्राप्ते मन्थरस्य कुशलम् स्थले गच्छतोऽस्य कः प्रकारः? (७९)

> शृगालेन हतो हस्ती गच्छता पङ्कवर्त्मना।
> भविष्यसि तथैव त्वं प्रयास्यन् स्थलवर्त्मना॥

मन्थरेणोक्तम् कथमेतत्? हिरण्यकः कथयति। अस्ति ब्रह्मारण्ये कर्पूरतिलको नाम हस्ती। तमवलोक्य सर्व्वे शृगालाश्चिन्तयन्ति स्म। यद्ययं केनाप्युपायेन म्रियते, तदस्माकमेतद्देहेन मासचतुष्टयस्य भोजनं भविष्यति। ततस्तन्मध्यादेकेन वृद्धशृगालेन प्रतिज्ञातम्,

---

(७७) कलिङ्गदेशे।

(७८) समावासितं स्थापितं कटकं शिविरं येन सः।

(७९) कः प्रकारः स्थले गमनसमर्थस्य का गतिः।

मया बुद्धिप्रभावादस्य मरणं साधयितव्यम्। अनन्तरं स वञ्चकः कर्पूरतिलकसमीपं गत्वा साष्टाङ्गपातं प्रणम्योवाच, देव! दृष्टिप्रसादं (८०) कुरु। हस्ती ब्रूते, कस्त्वम्? कुतः समायातः? सोऽवदत्, जम्बुकोऽहं सर्वैर्वनवासिभिः पशुभिर्मिलित्वा भवत्सकाशं प्रस्थापितः। यद् विना राज्ञाऽवस्थातुं न युक्तम्, तदत्राटवीराज्येऽभिषेक्तुं भवान् सर्वस्वामिगुणोपेतो निरूपितः। तद्यथा लग्नवेला (८१) न विचलति तथा कृत्वा सत्वरमागम्यतां देवेन इत्युक्त्वा उत्थाय चलितः ततोऽसौ राज्यलोभाकृष्टः कर्पूरतिलकः शृगालवर्त्मना धावन् महापङ्के निमग्नः। ततस्तेन हस्तिना उक्तम्, सखे! शृगाल! किमधुना विधेयम्, पङ्के निपतितोऽहं म्रिये, परावृत्य (८२) पश्य। शृगालेन विहस्योक्तम्, देव! मम पुच्छकावलम्बनं कृत्वा उत्तिष्ठ। यस्य मद्विधस्य वचसि त्वया प्रत्ययः कृतः, तदनुभूयतामशरणं (८३) दुःखमिति। ततो महापङ्के निमग्नो हस्ती शृगालैर्भक्षितः। अतोऽहं ब्रवीमि,

---

(८०) विलोकनानुग्रहम्।

(८१) मेषादिराशीनामुदयकालो लग्नम्। लग्नवेला राज्याभिषेकारम्भकालः। (८२) प्रत्यावृत्य।

(८३) नास्ति शरणं प्रतिकारको यस्य तत् दुःखमिति विहस्योक्तमिति पूर्व्वेणान्वयः।

शृगालेन हतो हस्तीत्यादि। तद्वचनमाकर्ण्य महता भयेन विमुग्ध इव तज्जलाशयमुत्सृज्य मन्थरश्चलितः। तेऽपि हिरण्यकादयः स्नेहादनिष्टं शङ्कमाना मन्थरमनुजग्मुः। ततः स्थले गच्छन् केनापि व्याधेन काननं पर्य्यटता मन्थरः प्राप्तः। तञ्च गृहीत्वा उत्थाप्य धनुषि बद्धा धन्योऽस्मीत्यभिधाय स्वगृहाभिमुखं चलितः। अथ ते मृगवायसमूषिकाः परं विषादमुपगतास्तमनुगच्छन्ति स्म। ततो हिरण्यको विलपति।

एकस्य दुःखस्य न यावदन्तं गच्छाम्यहं पारमिवार्णवस्य।
तावद् द्वितीयं समुपस्थितं मे छिद्रेष्वनर्था बहुलीभवन्ति (८४)॥

इति मुहुर्विचिन्त्य आह अहो मे दुर्दैवम्। अथवा इत्थमेवैतत्।

कायः सन्निहितापायः (८५) सम्पदः पदमापदाम्।
समागमाः सापगमाः सर्व्वमुत्पादिभङ्गुरम्॥

इति बहु विलप्य हिरण्यकश्चित्राङ्गलघुपतनकावाह, यावदयं व्याधो वनान्न निःसरति, तावन्मन्थरं मोचयितुं यत्नः क्रियताम्। तावूचतुः, सत्वरं कार्य्यमुपदिश। हिरण्यकोऽब्रूते, चित्राङ्गो जलसमीपं गत्वा

---

(८४) एकस्य दुःखस्य चित्रग्रीवजालबन्धनिबन्धनकष्टस्य। द्वितीयं मन्थरनिग्रहजनितदुःखम्। छिद्रेषु रन्ध्रेषु प्रवेशमार्गेषु सत्स्वित्यर्थः। अनर्थाः अमङ्गलानि बहुलीभवन्ति क्रमशः आपतन्तीत्यर्थः।

(८५) अपायः विनाशः।

मृतमिव आत्मानं निश्चेष्टं दर्शयतु। काकश्च तस्योपरि स्थित्वा चञ्चा किमपि विलिखतु। नूनमनेन लुब्धकेन मृगमांसार्थिना कच्छपं परित्यज्य सत्वरं गन्तव्यम्। ततोऽहं मन्थरस्य बन्धनं छेत्स्यामि। ततश्चित्राङ्गलघुपतनकाभ्यां शीघ्रं गत्वा तथानुष्ठिते स व्याधः परिश्रान्तः पानीयं पीत्वा तरोरधस्तादुपविष्टस्तथाविधं मृगमवलोक्य कच्छपं जलसमीपे निधाय कर्त्तरिका-(८६) मादाय प्रहृष्टमना मृगान्तिकं चलितः। अत्रान्तरे हिरण्यकेनागत्य छिन्नबन्धनः स कूर्म्मः सत्वरं जलाशयं प्रविष्टः। स च मृग आसन्नं तं व्याधं विलोक्य उत्थाय द्रुतं पलायितः। प्रत्यावृत्य लुब्धको यावत्तरुतलमायाति तावत् कूर्म्ममपश्यन्नचिन्तयत्।

यो ध्रुवाणि (८७) परित्यज्य अध्रुवाणि निषेवते।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव हि॥

ततोऽसौ निराशः कटकं प्रविष्टः। मन्थरादयश्च सर्वे मुक्तापदः (८८) स्वस्थानं गत्वा यथासुखमास्थिताः।

अथ राजपुत्त्रैः सानन्दमुक्तम्, सर्वं श्रुतवन्तः सुखिनो वयम्। सिद्धं नः समीहितम्। विष्णुशर्म्मोवाच, एतावता भवतामभिलषितं सम्पन्नम्।

---

(८६) छुरिकाम्।

(८७) ध्रुवाणि निश्चितानि लब्धवस्तूनीत्यर्थः। ध्रुवोऽस्त्रिदे जीवन्तु निश्चिते शाश्वते त्रिषु इत्यमरः। (८८) आपन्मुक्ताः।

## यदुवंश विनाशः।

कदाचित् सर्व्वे यदुकुमारा नर्म्मदायाम्(१) चर्त्तुम्(२) आजग्मुः। तत्र तपन्तं (३) कण्वं महर्षिं दृष्ट्वा जाम्बवत्याः सुतं योषिद्वेशं कृत्वा (४) तस्योदरे कार्ष्णायसं (५) मुषलं वाससा बद्ध्वा ऋषेः समीपमागत्य सर्व्वे तं नमस्कृत्य स्त्रीरूपं शाम्बं कुमारं तस्य पुरतो निधाय अस्या गर्भस्थं स्त्री वा पुरुषो वा भगवन्! ब्रूहीत्यूचुः। स तु मनसा तद्विधं (६) ज्ञात्वा महामर्षम् (७) आविष्टस्तान् सर्व्वान् (८) अनेन मुषलेन यूयं सर्व्वे निहता भवन्तु इत्युवाच। ते सर्व्वे समुद्विग्नमनसः श्रीकृष्णं समेत्य ऋषिणोक्तं, तत् तस्मै निवेदयामासुः। श्रीकृष्णोऽपि तदायसमुषलं चूर्णीभूतं कृत्वा महाह्रदे निपातयामास। तत्र तदायसमुषल-चूर्णीभूतबीजादुद्भूता वज्रसन्निभा एरकाः (९)महोदधौ

---

(१) लक्षणया नर्म्मदाख्यनदीतीरे।

(२) चर्त्तुं चरितुम् भ्रमितुमित्यर्थः। इड़भाव आर्षः।

(३) तपन्तमित्यार्षप्रयोगः। तपस्तप्यमानं तपोऽर्ज्जयन्तमित्यर्थः।

(४) वस्त्रालङ्कारादिभिः योषितम् भूषयित्वेत्यर्थः।

(५) नीलवर्णलौहनिर्मितम्।

(६) तादृशं योषिद्वेशधारिपुरुषोदरे कार्ष्णायसमुषलविन्यासरूपमित्यर्थः।

(७) महाकोपम्। (८) यादवानित्यर्थः।

(९) एरकाभिधग्रन्थिहीनतृणविशेषाः।

(१०) सम्बभूवुः। तत्र तस्य मुषलशेषं कनिष्ठाङ्गुलिमात्रं निक्षिप्तं तं मत्स्यो जग्राह। तं मत्स्यं जरा नाम निषादः (११) हत्वा तदुदरस्थं मुषलशेषमादाय बाणाग्रे (१२) नाराचम् (१३) अकरोत्। कदाचित् सर्व्वे यादवा रामकृष्णप्रद्युम्नादयो महाबलास्तस्मात् पुराद्विनिष्क्रम्य तिस्रः कोट्यो महोत्सवयात्रां कर्त्तुं तन्महाह्रदसमीपमाजग्मुः। तत्र बहुमद्यमांसादिकं भुक्त्वा सर्व्वे मत्ताः क्रीडार्थं तत्समुद्रह्रदसमुद्भूता एरका उत्पाट्य वज्रधारसन्निभास्ताभिः परस्परं जघ्नुः। तदेरकाघातनादेव (१४) सर्व्वे बलभद्र-प्रद्युम्नादयो यादवा निःशेषं त्यक्तजीविता बभूवुः। ते सर्व्वे स्वान् स्वान् त्रिदशान् प्रपेदिरे। एवं मुषलेन सर्व्वं संहृत्य स्वयमेको वासुदेवो बहुलतागुल्म-समाकीर्णमहीरुहच्छायायां सकलचतुर्विधात्मान्तस्थं (१५) श्रीवासुदेवात्मकम् (१६) आत्मानं चिन्तयन् जानूपरि पदं निधाय योगेनात्मनो मानुषवपुस्त्याज।

(१०) लवणया महोदधितीरे। (११) व्याधः।

(१२) बाणाग्रे काण्डाग्रे "बाणः स्याद्गोस्तने दैत्यभेदे कीबलकाण्डयोः" इति मेदिनी।

(१३) नाराचम् अस्त्रविशेषम्। (१४) तदेरकाप्रहरणात्।

(१५) सकलचतुर्विधात्मान्तस्थं जरायुजाण्डजोद्भिज्जस्वेदजादिसमस्त प्राणिहृदगतम्। (१६) निर्म्मलान्तःकरणे प्रकाशमानस्वरूपम्।

## वृहच्चाणक्यम्।

मूर्खशिष्योपदेशेन (१) दुष्टस्त्रीभरणेन च।
द्विषतां (२) सम्प्रयोगेण (३) पण्डितो ह्यवसीदति (४)॥

उन्मत्तानां भुजङ्गानां मद्यपानाञ्च दन्तिनाम् (५)
स्त्रीणां राजकुलानाञ्च विश्वसन्ति गतायुषः॥

वैरिणां (६) सह विश्वासं यो नरः कर्त्तुमिच्छति।
स वृक्षाग्रेषु संसुप्तः पतितः प्रतिबुध्यते (७)॥

धनधान्यप्रयोगेषु विद्यासंग्रहणेषु च।
आहारव्यवहारेषु त्यक्तलज्जः सदा भवेत्॥

न गुरोः सदृशी माता न गुरोः सदृशः पिता।
यस्तारयति संघोरं संसाराब्धिं सुदुस्तरम् (८)॥

न च विद्यासमो बन्धुर्न च व्याधिसमो रिपुः।
न चापत्यसमः स्नेहो न च दैवात् परं बलम्॥

---

(१) अज्ञानशिष्यशिक्षया। (२) शत्रूणाम्।

(३) सुनीतिशिक्षया। (४) जन इति कर्त्तृपदमूह्यम्।

(५) दन्तायुधानां व्याघ्रादीनामित्यर्थः।

(६) सम्बन्धविवक्षया षष्ठी।

(७) वृक्षशाखासुप्तोऽनवधानात् विनष्टप्रायो भूत्वा यथा जागरितो भवति तथा शत्रुं विश्वास्य आशु: विनश्यतीति भावः।

(८) संसारसमुद्रतारकतया मातुः पितुश्च गुरोः प्राधान्यमिति युक्तियुक्तमेवेति।

विद्या प्रवासिनो (९) मित्रं भार्य्या मित्रं गृहेषु च।
आतुरस्यौषधं मित्रं धर्म्मो मित्रं परत्र च॥
अनभ्यासे हता विद्या नित्यह्रासैर्हताः (१०) स्त्रियः।
कुबीजेन हतं क्षेत्रं भृत्यदोषैर्हतो नृप.॥
यस्य पुत्त्रो न विद्वान् स्यात् न शूरो न च पण्डितः।
अन्धकारं कुलं तस्य नष्टचन्द्रेव शर्व्वरी (११)॥
शर्व्वरीदीपकश्चन्द्रः प्रभातदीपको रविः।
त्रैलोक्यदीपको धर्म्मः सुपुत्त्रः कुलदीपकः॥
जनयितोपनेता च यस्तु विद्यां प्रयच्छति।
अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः (१२)॥
गुरुपत्नी राजपत्नी मित्रपत्नी तथैव च।
पत्नीमाता स्वमाता च पञ्चैताः मातरः स्मृताः॥
पुत्त्रास्तु विविधैः शास्त्रैर्नियोज्याः सततं बुधैः।
नीतिज्ञा बुद्धिसम्पन्ना भवन्ति खलु पूजिताः॥
पठ पुत्त्र! किमालस्यमपठो भारवाहकः।
पठन् सम्पूज्यते राज्ञा पठ पुत्त्र! दिने दिने॥
गुणेषु क्रियतां यत्नः किमतोऽन्यत् प्रयोजनम्।
विक्रीयन्ते न घण्टाभि (१३) र्गावः क्षीरविवर्ज्जिताः॥

---

(९) विदेशगतस्य। (१०) दूषिताः।

(११) शशिविरहिणी निशीथिनी यथा न शोभते तत्कुलमपि न शोभते इति भावः।

(१२) प्राचीनैरिति शेषः। (१३) भूषिता इति शेषः।

नरस्याभरणं रूपं रूपस्याभरणं गुणः।
गुणस्याभरणं ज्ञानं ज्ञानस्याभरणं क्षमा॥
अगुणस्य हतं रूपमशीलस्य हतं कुलम्।
असिद्धेश्च हता विद्या चाभोगस्य हतं धनम्॥
गुणो भूषयते रूपं शीलं भूषयते कुलम्।
सिद्धिर्भूषयते विद्यां भोगो भूषयते धनम्॥
सुकुले योजयेत् कन्यां पुत्रं विद्यासु योजयेत्।
व्यसने योजयेच्छत्रुं मित्रं धर्म्मे नियोजयेत्॥
नात्युच्चशिखरो मेरुर्नातिनिम्नं रसातलम्।
व्यवसायसहायानां नातिपारो महोदधिः॥
श्लोकेन च तदर्द्धेन पादेनैकाक्षरेण च।
अवन्ध्यं दिवसं कुर्य्यात् दानाध्ययनकर्म्मसु॥
योजनानां सहस्राणि वत्स यान्ति पिपीलिकाः।
अगच्छन् वैनतेयो (१४) ऽपि पादमेकं न गच्छति॥
शनैरर्थाः शनैर्विद्या शनैः पर्वतलङ्घनम्।
शनैर्धर्म्मश्च कामश्च व्यायामाश्च (१५) शनैः शनैः॥
गुरुशुश्रूषया विद्या पुष्कलेन (१६) धनेन वा।
अथवा विद्यया विद्या चतुर्थान्नोपलभ्यते॥
एकाक्षरप्रदातारं यो गुरुं नाभिमन्यते।
श्वानयोनिशतं गत्वा चाण्डालेष्वपि जायते॥

---

(१४) विनतानन्दनः गरुड़ इत्यर्थः।

(१५) श्रमसाधनव्यापाराः। (१६) विपुलेन।

शिल्पं शौलमनालस्यं पाण्डित्यं मित्रसंग्रहः।
अचौरहरणी (१७)विद्या षड़ेते चाक्षया नयाः(१८)॥
न हि जन्मनि ज्येष्ठत्वं ज्येष्ठत्वं गुणमुच्यते।
गुणा गुणतरं यान्ति (१९) पयो दधि घृतं यथा॥
किं कुलेन विशालेन गुणवान् पूज्यते नरः।
धनुर्वंशविशुद्धोऽपि निर्गुणः किं करिष्यति॥
नावर्थी भजते नावं यावत् पारं न गच्छति।
उत्तीर्णे च गते पारे नौकायाः किं प्रयोजनम्॥
गुणाः कुर्वन्त्यदूरत्वं दूरेऽपि वसतां सताम्।
केतकीगन्धमाघ्राय स्वयं गच्छन्ति षट्पदाः॥
एकेनापि सुपुत्रेण विद्यायुक्तेन साधुना।
कुलं पुरुषसिंहेन चन्द्रेणेव प्रकाश्यते॥
विद्याया भाजनं कश्चित् कश्चिद् द्रव्यस्य भाजनम्।
उभयोर्भाजनं कश्चित् कश्चिन्नोभयभाजनम्॥
नमन्ति फलिनो वृक्षा नमन्ति गुणिनो जनाः।
शुष्ककाष्ठञ्च मूर्खश्च भिद्यते न च नम्यते॥

---

(१७) चौर्य्यातिरिक्ता।
(१८) श्रेयाः इति शेषः। (१९) मनुष्या इति शेषः।

# रामायणम् ।

## सीता-प्रवासनम् ।

ततस्तीरमुपागम्य भागीरथ्याः स लक्ष्मणः ।
उवाच मैथिलीं वाक्यं प्राञ्जलिर्बाष्पसंवृतः (१) ॥
हृद्गतं मे महत् शल्यं, यस्मादार्य्येण धीमता ।
अस्मिन्निमित्ते वैदेहि ! लोकस्य वचनीकृतः (२) ॥
श्रेयो हि मरणं मेऽद्य मृत्योर्वा यत् परं भवेत् ।
न चास्मीदृशे कार्य्ये नियोज्य लोकनिन्दिते ॥
प्रसीद च, न मे पापं कर्त्तुम (३) र्हसि शोभने ! ।
इत्यञ्जलिकृतो (४) भूमौ निपपात स लक्ष्मणः ॥
रुदन्तं प्राञ्जलिं दृष्ट्वा काङ्क्षन्तं मृत्युमात्मनः ।
मैथिली भृशसंविग्ना लक्ष्मणं वाक्यमब्रवीत् ॥
किमिदं नावगच्छामि ब्रूहि तत्त्वेन लक्ष्मण ! ।
पश्यामि त्वां न च स्वस्थमपि क्षेमं महीपतेः ? ॥
शापितोऽसि नरेन्द्रेण यत्त्वं सन्तापमागतः ।
तद् ब्रूयाः सन्निधौ मह्यम् (५) अहमाज्ञापयामि ते ॥
वैदेह्या नोद्यमान (६) स्तु लक्ष्मणो दीनचेतनः ।
अवाङ्मुखो बाष्पगलो वाक्यमेतदुवाच ह ॥

---

(१) संवृतनेत्र इत्यर्थः ।
(२) निन्दनीयः कृत इत्यर्थः । वच—कर्म्मणि अनट्, अभूततद्भावे च्विः ।
(३) पापं कर्त्तुं दोषं दातुमित्यर्थः ।
(४) कृताञ्जलिरित्यर्थः ।
(५) ममेत्यर्थः । अथवा मह्यं ब्रूया इति अन्वयः ।
(६) प्रेर्य्यमाणः ।

श्रुत्वा परिषदो मध्ये ह्यपवादं सुदारुणम् ।
पुरे जनपदे चैव त्वत्कृते जनकात्मजे ! ॥
रामः सन्तप्तहृदयो मां निवेद्य गृहं गतः ॥
न तानि वचनीयानि (७) मया देवि ! तवाग्रतः ।
यानि राज्ञा हृदि न्यस्तान्यमर्षादपवादजात् ॥
सा त्वं त्यक्ता नृपतिना निर्दोषा मम सन्निधौ (८) ।
पौरापवादभीतेन ग्राह्यं देवि ! न तेऽन्यथा ॥
आश्रमान्तेषु च मया त्यक्तव्या त्वं भविष्यसि ।
राज्ञः शासनमादाय तथैव किल दौर्हृदम् (९) ॥
तदेतज्जाह्नवीतीरे ब्रह्मर्षीणां तपोवनम् ।
पुण्यञ्च रमणीयञ्च मा विषादं कृथाः शुभे ! ॥
राज्ञो दशरथस्यैव पितुर्मे मुनिपुङ्गवः ।
सखा परमको (१०) विप्रो वाल्मीकिः सुमहायशाः ॥
पादच्छायामु (११) पागम्य सुखमस्य महात्मनः ।
उपवासपरैकाग्रा वस त्वं जनकात्मजे ! ॥
पतिव्रतात्वमास्थाय रामं कृत्वा सदा हृदि ।
श्रेयस्ते परमं देवि ! तथा कृत्वा भविष्यति ।

---

(७) वक्तुं शक्यानि ।

(८) ममसन्निधौ अग्निवरीक्षादिभिः निर्द्दोषापीत्यर्थः ।

(९) दौर्हृदम् आदाय गर्भिण्या अभिलषितमवश्यं कार्य्यमिति ज्ञात्वा इत्यर्थः । (१०) श्रेष्ठः (स्वार्थे कण्) ।

(११) पादच्छायां पादमूलं तत्पादतलमिति यावत् ।

लक्ष्मणस्य वचः श्रुत्वा दारुणं जनकात्मजा ।
परं विषादमागम्य वैदेही निपपात ह ॥
सा मुहूर्त्तमिवासंज्ञा बाष्पपर्य्याकुलेक्षणा ।
लक्ष्मणं दीनया वाचा उवाच जनकात्मजा ॥
मामिकेयं तनुर्नूनं सृष्टा दुःखाय लक्ष्मण ! ।
धात्रा यस्यास्तथा मेऽद्य दुःखमूर्त्तिः (१२) प्रदृश्यते ॥
किं नु पापं कृतं पूर्वं को वा दारैर्वियोजित. ।
याहं शुद्धसमाचारा त्यक्ता नृपतिना सती ॥
पुराहमाश्रमेऽवात्सं रामपादानुवर्त्तिनी ।
अनुरुद्धापि सौमित्रे दुःखे च परिवर्त्तिनी ॥
सा कथं ह्याश्रमे सौम्य ! वत्स्यामि विजनीकृता (१३) ।
आख्यास्यामि च कस्याहं दुःखं दुःखपरायणा ॥
किं नु वक्ष्यामि मुनिषु कर्म्म चासत्कृतं प्रभोः ।
कस्मिन् वा कारणे त्यक्ता राघवेण महात्मना ॥
न खल्वद्यैव सौमित्रे! जीवितं जाह्नवीजले ।
त्यजेयं राजवंशस्तु भर्त्तुर्मे परिहास्यते (१४) ॥
यथाज्ञां कुरु सौमित्रे ! त्यज (१५) मां दुःखभागिनीम्
विदेशे स्थीयतां राज्ञः शृणु चेदं वचो मम ॥

---

(१२) दुःखमूर्त्तिः मूर्त्तिमान् दुःखसमूहः ।

(१३) रामविरहितेति भावः ।

(१४) विच्छिन्नो भविष्यतीत्यर्थः ।

(१५) त्यज विसृज्य ।

श्वश्रूणामविशेषेण प्राञ्जलिप्रग्रहेण (१६) मे।
शिरसा वन्द्य (१७) चरणौ कुशलं ब्रूहि लक्ष्मण!॥
वक्तव्यश्चापि नृपतिर्धर्म्मेषु सुसमाहितः।
जानासि च यथाशुद्धा सीता तत्त्वेन राघव!॥
भक्त्या च परया युक्ता हिता च तव नित्यशः।
अहं त्यक्ता त्वया वीर! अयशोभीरुणा जने॥
यच्च ते वचनीयं स्यादपवादसमुत्थितम् (१८)।
मया च परिहर्त्तव्यं त्वं हि मे परमा गतिः॥
वक्तव्यश्चैव नृपतिःधर्म्मेषु सुसमाहितः।
यथा भ्रातृषु वर्त्तेथास्तथा पौरेषु नित्यदा॥
परमो ह्येष धर्म्मस्ते, तस्मात् कीर्त्तिरनुत्तमा।
अहन्तु नानुशोचामि स्वशरीरं नरर्षभ!।
यथापवादं पौराणां तथैव रघुनन्दन! (१९)॥
पतिर्हि दैवता नार्य्याः पतिर्बन्धुः पतिर्गुरुः।
प्राणैरपि प्रियं तस्मात् भर्त्तुः कार्य्यं विशेषतः।
इति मद्वचनाद्रामो वक्तव्यो मम संग्रहम् (२०)॥

---

(१६) प्राञ्जलिप्रग्रहेण प्रकृष्टाञ्जलियुक्तेन शिरोविशेषणम्।

(१७) वन्द्य इति आर्षः प्रयोगः वन्दित्वा, क्रमदीश्वरमते वन्द्य इति प्रयोगो भवितुमर्हति।

(१८) अपवादः निन्दा मम असाधुत्वरूपाख्यातः तस्मात् समुत्थित-मुत्पन्नम्।

(१९) यथा पौराणाम् अपवादः अपगच्छेत् तथैव कुरु इत्यर्थः।

(२०) रामं प्रति मदुक्तस्य संक्षेप मित्यर्थः।

इति ब्रुवन्त्यां सीतायां लक्ष्मणो दीनचेतनः।
शिरसा वन्द्य (२१) धरणीं व्याहर्त्तुं न शशाक ह॥
प्रदक्षिणञ्च तां कृत्वा (२२) रुदन्नेव महास्वनम्।
आरुरोह पुनर्नावं नाविकं चाभ्यनोदयत्॥
स गत्वा चोत्तरं तीरं शोकभारसमन्वितः।
संमूढ़ इव दुःखेन रथमध्यारुहद् (२३) द्रुतम्॥
मुहुर्मुहुः परावृत्त दृष्ट्वा सीतामनाथवत्।
चेष्टन्तीं (२४) परतीरस्थां लक्ष्मणः प्रययावथ॥
दूरस्थं रथमालोक्य लक्ष्मणञ्च मुहुर्मुहुः।
निरीक्षमाणा तूद्विग्ना सीता शोकं समाविशत्।

---

## लक्ष्मणवर्ज्जनम्।

तथा तयोः (१) संवदतोर्दुर्वासा भगवानृषिः।
रामस्य दर्शनाकाङ्क्षी राजद्वारमुपागमत्॥
सोऽभिगम्य तु सौमित्रिमुवाच ऋषिसत्तमः।
रामं दर्शय मे शीघ्रं पुरा मेऽर्थोऽतिवर्त्तते॥

---

(२१) इति आर्षः प्रयोगः, वन्दित्वा।
(२२) प्रदक्षिणं कृत्वा आर्षः प्रयोगः प्रदक्षिणीकृत्य।
(२३) अध्यारुहत् आर्षः प्रयोग, अध्यारोहत्।
(२४) चेष्टमानाम्।
(१) तयोः कालपुरुषरामयोः।

मुनेस्तु भाषितं श्रुत्वा लक्ष्मणः परवीरहा।
अभिवाद्य महात्मानं वाक्यमेतदुवाच ह॥
किं कार्य्यं ब्रूहि भगवन्! को ह्यर्थः किं करोम्यहम्।
व्यग्रो हि राघव ब्रह्मन्! मुहूर्त्तं परिपाल्यताम् (२)
तच्छ्रुत्वा ऋषिशार्दूलः क्रोधेन कलुषीकृतः।
उवाच लक्ष्मणं वाक्यं निर्दहन्निव चक्षुषा॥
अस्मिन् क्षणे मां सौमित्रे! रामाय प्रतिवेदय।
विषयं (३) त्वां पुरञ्चैव शपिष्ये राघवं तथा।
भरतञ्चैव सौमित्रे युष्माकं या च सन्ततिः (४)॥
न हि शक्ष्याम्यहं भूयो मन्युं (५) धारयितुं हृदि।
तच्छ्रुत्वा घोरसङ्काशं (६) वाक्यं तस्य महात्मनः।
चिन्तयामास मनसा तस्य वाक्यस्य निश्चयम्॥
एकस्य मरणं मेऽस्तु मा भूत् सर्व्वविनाशनम्।
इति बुद्ध्या विनिश्चित्य राघवाय न्यवेदयत्॥
लक्ष्मणस्य वचः श्रुत्वा रामः कालं (७) विसृज्य च।
निःसृत्य त्वरितो राजा अत्रेः पुत्त्रं ददर्श ह॥
सोऽभिवाद्य महात्मानं ज्वलन्तमिव तेजसा।
किं कार्य्यमिति काकुत्स्थः कृताञ्जलिरभाषत॥

---

(२) प्रतीक्ष्यताम्। (३) राज्यादिकम्।
(४) तामपि शपिष्ये इत्यन्वयः।
(५) कोप मन्यु क्रोधौ कुधि इत्यमरः।
(६) भयजनकम्। (७) कालपुरुषम्।

तद्वाक्यं राघवेणोक्तं श्रुत्वा मुनिवरः प्रभुः।
प्रत्याह रामं दुर्व्वासाः श्रूयतां धर्म्मवत्सल!॥
अद्य वर्षसहस्रस्य समाप्तिर्म्मम राघव!।
सोऽहं भोजनमिच्छामि यथासिद्धन्तवानघ!॥
तच्छ्रुत्वा वचनं राजा राघवः प्रीतमानसः।
भोजनं मुनिमुख्याय यथासिद्धमुपाहरत्॥
स तु भुक्त्वा मुनिश्रेष्ठस्तदन्नममृतोपमम्।
साधु रामेति सम्भाष्य स्वमाश्रममुपागमत्॥
तस्मिन् गते महाभागे प्रीतो राघवनन्दनः।
संस्मृत्य कालवाक्यानि (८) ततो दुःखमुपागमत्॥
दुःखेन च सुसन्तप्तः स्मृत्वा तं घोरदर्शनम्।
अवाङ्मुखो (९) दीनमना व्याहर्त्तुं न शशाक ह॥
ततो बुद्ध्या विनिश्चित्य कालवाक्यानि राघवः।
नैतदस्तीति निश्चित्य तूष्णीमासीन्महायशाः॥
अवाङ्मुखमथो दीनं दृष्ट्वा सोममिवाप्लुतम् (१०)।
राघवं लक्ष्मणो वाक्यं हृष्टो मधुरमब्रवीत्॥
न सन्तापं महाबाहो! मदर्थं कर्त्तुमर्हसि।
पूर्व्वनिर्म्माणबद्धा हि कालस्य गतिरीदृशी॥

---

(८) द्वन्द्वे ह्येतत् प्रवक्तव्यं हितं वै यदि मन्यसे।
यः शृणोति समीचेद्वा स वध्यो भविता तव॥
इति कालवाक्यम्॥

(९) अधोमुखः। (१०) राहुग्रस्तम्।

जहि मां सौम्य। विस्रब्धं प्रतिज्ञां परिपालय।
हीनप्रतिज्ञाः काकुत्स्थ! प्रयान्ति नरकं नराः॥
यदि प्रीतिर्महाराज! यद्यनुग्राह्यता मयि।
जहि मां निर्व्विशङ्कस्त्वं धर्म्मं वर्द्धय राघव॥
लक्ष्मणेन तथोक्तस्तु रामः प्रचलितेन्द्रियः।
मन्त्रिणः समुपानीय तथैव च पुरोधसः।
अब्रवीच्च तदा वृत्तं (११) तेषां मध्ये स राघवः।
दुर्व्वाससोऽभिगमनञ्चैव प्रतिज्ञा तापसस्य च॥
तच्छ्रुत्वा मन्त्रिणः सर्व्वे सोपाध्यायाः समासतः।
वशिष्ठस्तु महातेजा वाक्यमेतदुवाच ह॥
दृष्टमेतन्महाबाहो! क्षयन्ते रोमहर्षणम्।
लक्ष्मणेन वियोगश्च तव राम महायशः!॥
त्यजैनं बलवान् कालो मा प्रतिज्ञां वृथा कृथाः।
प्रतिज्ञायां हि नष्टायां धर्म्मो हि विलयं (१२) व्रजेत्॥
ततो धर्म्मे विनष्टे तु त्रैलोक्यं सचराचरम्।
सदेवर्षिगणं सर्वं विनश्येत्तु न संशयः॥
स त्वं पुरुषशार्दूल! त्रैलोक्यस्याभिपालनात्।
लक्ष्मणेन विना चाद्य त्रैलोक्यं त्रातुमर्हसि॥
तेषां तत् समवेतानां वाक्यं धर्म्मार्थसंहितम् (१३)।
श्रुत्वा परिषदो मध्ये रामो लक्ष्मणमब्रवीत्॥

---

(११) वृत्तान्तम्। (१२) विलयं विनाशम्।
(१३) धर्म्मार्थसंयुक्तम्।

विसर्जये त्वां सौमित्रे! मा भूद्धर्म्मविपर्य्ययः।
त्यागो बधो वा विहितः साधूनामुभयं समम्॥
रामेण भाषिते वाक्ये वाष्पव्याकुलितेन्द्रियः।
लक्ष्मणस्त्वरितः प्रायात् स्वगृहं न विवेश ह॥
स गत्वा सरयूतीरमुपस्पृश्य (१४) कृताञ्जलिः।
निगृह्य सर्वस्रोतांसि (१५) निश्वासं न मुमोच ह॥
अनिश्वसन्तं युक्तन्तं सशक्राः (१६) साप्सरोगणाः।
देवाः सर्षिगणाः सर्वे पुष्पैरभ्यकिरन् (१७) तदा॥
अदृश्यं सर्वमनुजैः सशरीरं महाबलम्।
प्रगृह्य लक्ष्मणं शक्रस्त्रिदिवं (१८) संविवेश ह॥
ततो विष्णोश्चतुर्भागमागतं सुरसत्तमाः।
हृष्टाः प्रमुदिताः सर्वे पूजयन्ति स्म राघवम्॥

---

## गरुड़पुराणम्।

### नीतिसारः।

सद्भिः (१) सङ्गं प्रकुर्वीत सिद्धिकामः सदा नरः।
नासद्भिरिह लोकाय परलोकाय वाञ्छितम्॥
कालेऽपि रिपुणा सन्धिः काले मित्रेण विग्रहः।
कार्य्यकारणमाश्रित्य कालं क्षिपति पण्डितः॥

---

(१४) आचम्य। (१५) सर्व्वस्रोतांसि सर्व्वेन्द्रियाणि। (१६) सेन्द्राः।
(१७) ववृषुः। (१८) स्वर्गम्।
(१) सज्जनैः सह।

उत्तमैः सह साङ्गत्यं पण्डितैः सह सत्कथाम्।
अलुब्धैः सह मित्रत्वं कुर्वाणो नावसीदति॥
परोऽपि हितवान् बन्धुः बन्धुरप्यहितः परः।
अहितो देहजो व्याधिः हितमारण्यमौषधम्॥
स बन्धुर्यो हिते युक्तः स पिता यस्तु पोषकः।
तन्मित्रं यत्र विश्वासः स देशो यत्र जीवति॥
यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः।
यस्यार्थाः स पुमान् लोके यस्यार्थाः स च पण्डितः॥

त्यजन्ति मित्राणि धनैर्विहीनं
पुत्राश्च दाराश्च सुहृज्जनाश्च।
ते चार्थवन्तं पुनराश्रयन्ते
चार्थो हि लोके पुरुषस्य बन्धुः॥

मनस्तापं न कुर्वीत आपदं प्राप्य मानवः।
समबुद्धिः प्रसन्नात्मा सुखदुःखे समो भवेत्॥
धीराः कष्टमनुप्राप्ताः न भवन्ति विषादिनः।
प्रविश्य वदनं राहोः किं नोदेति पुनः शशी?॥
उद्‌योगः साहसं धैर्य्यं बुद्धिः शक्तिः पराक्रमः।
षड्‌विधे यस्य उत्साहस्तस्य देवोऽपि शङ्कते॥

शत्रोरपत्यानि प्रियंवदानि
नोपेक्षितव्यानि बुधैर्मनुष्यैः।
तान्येव कालेषु विपत्‌कराणि
विषस्य पात्राण्यपि दारुणानि (२)॥

(२) दारुणानि भयजनकानि।

सद्भिरासीत सततं सद्भिः कुर्वीत सङ्गतिम् ।
सद्भिर्विवादं मैत्रीञ्च नासद्भिः किञ्चिदाचरेत् ॥
नोपेक्षितव्यो दुर्बुद्धिः शत्रुरल्पोऽप्यवज्ञया ।
वह्निरल्पोऽपि संग्राह्यः कुरुते भस्मसात् (३) जगत् ॥
शौर्य्ये तपसि दाने वा यस्य न प्रथितं (४) यशः ।
विद्यायामर्थकामे वा मातुरुच्चार (५) एव सः ॥
स्वाधीनवृत्तिः साफल्यं न पराधीनवृत्तिता ।
ये पराधीनकर्म्माणो जीवन्तोऽपि च ते मृताः ॥
दुर्ज्जनस्य हि सङ्गेन सुजनोऽपि विमुह्यति ।
प्रसन्नजलमित्याहुः कर्द्दमैः कलुषीकृतम् ॥
लोभप्रमादविश्वासैः पुरुषो नश्यति त्रिभिः ।
तस्माल्लोभो न कर्त्तव्यः प्रमादो न च विश्वसेत् (६) ॥

अर्थेन किं कृपणहस्तगतेन पुंसां ?
ज्ञानेन किं बहुशठाकुलसङ्कुलेन ? ।
रूपेण किं गुणपराक्रमवर्ज्जितेन ?
मित्रेण किं व्यसनकालपराङ्मुखेन ? ॥

चलत्येकेन पादेन तिष्ठत्येकेन बुद्धिमान् ।
नासमीक्ष्य (७) परं स्थानं पूर्वमायतनं (८) त्यजेत् ॥

---

(३) भस्मसात् भस्मीभूतमित्यर्थः ।

(४) प्रथितं विस्तृतम् । (५) उच्चारः विष्ठातुल्यः ।

(६) अपरिज्ञाताशयं कमपि जनमिति शेषः ।

(७) असमीक्ष्य अपर्य्यालोच्य । (८) आयतनम् आश्रयम् ।

लुब्धमर्थेन गृह्णीयात् स्तब्ध (९) मञ्जलिकर्म्मणा।
मूर्खं छन्दानुवृत्त्या (१०) च यथातथ्येन पण्डितम्॥
यस्य यस्य हि यो भावः तस्य तस्य हि तं नरम्।
अनुप्रविश्य मेधावी (११) क्षिप्रमात्मवशं नयेत्॥
अर्थनाशं मनस्तापं गृहे दुश्चरितानि च।
गञ्जनं (१२) चापमानञ्च मतिमान्न प्रकाशयेत्॥
सकृद्दुष्टन्तु यम्मित्रं पुनः सन्धातु (१३) मिच्छति।
स मृत्युमुपगृह्णाति गर्भमश्वतरी तथा॥

---

## ध्रुवोपाख्यानम्।

### सुनन्द उवाच।

उत्तानपादनामासीन्मनोः स्वायम्भुवस्य वै।
तनयः सुमथः सर्वराजाचारसमन्वितः।
द्वे चास्य भार्य्ये (१) सुन्दर्य्यौ सुनीतिः सुरुचिस्तथा॥
सुरुच्यामुत्तमो ज्येष्ठः सुतस्तस्य महात्मनः।
सुनीत्यान्तु ध्रुवो जज्ञे कनीयान् प्रगुणाधिकः॥
सुरुच्यां प्रेमवान् राजा सुनीत्यां नैव तादृशः॥

---

(९) स्तब्धं बधिरम्।
(१०) छन्दानुवृत्त्या तदभिप्रायानुगमनेन। (११) मेधावी सुबुद्धिमान्।
(१२) गञ्जनं तिरस्कारम्। (१३) सन्धातुं संयोजयितुम्।
(१) आस्तामिति शेषः।

एकदा तु महाराजः सुरुच्या सह लालयन्।
पेम्णोत्तमं नाम सुतं वसन्नासीत् वरासने॥
तद्विलोक्य ध्रुवस्तातं राजसिंहासनाश्रितम्।
आरोढुमङ्क (२) मेतस्य शनै (३) रुपजगाम ह॥
अर्द्धासनमथारूढं ध्रुवं दृष्ट्वा महीपतिः।
तातेहि वत्स पुत्रेति अभ्यनन्दत (४) भूपतिः॥
तद्विलोक्य कटाक्षेण अतीव प्रेक्ष्य भूपतिम्।
उवाच निष्ठुरां वाचं स्तब्धे (५) शृण्वति राजनि॥
वत्स ध्रुव! किमारोढुमिच्छस्यङ्कं महीपतेः।
बाल! बालिशया बुद्ध्या दुर्भागाजठरोद्भवः॥
अस्मिन् सिंहासने वस्तुं न त्वया सुकृतं कृतम्।
यदि वाञ्छसि पुत्र त्वमेतन्नाम नृपासनम्॥
तपसा विष्णुमाराध्य सुकृतानि विधाय च।
मद्गर्भे साधयात्मानं (६) वरसौभाग्यभाजने॥
पश्योत्तममिमं वत्स! तवैव भ्रातरं नृपः।
स्वाङ्कमारोप्य सुस्निग्धः परमानन्दनिर्वृतः॥
एवमुक्तः स राजेन्द्रस्तया स परिभर्त्सितः।
पतन्नियम्य वाष्पाम्बु धैर्य्यात् किञ्चिन्न चोक्तवान्॥

---

(२) अङ्कं क्रोडदेशम्। (३) शनैः मन्दं मन्दम्।

(४) अभ्यनन्दत इत्यत्रात्मनेपदमार्षम्।

(५) स्तब्धो निष्पन्दः सन् किमपि वक्तुमसमर्थः।

(६) साधय पुनर्जन्मापहरणं कुरु।

राजापि किञ्चिन्नोवाच महिष्याः प्रेमयन्त्रितः ॥
ध्रुवः प्रणम्य पितरं शोकं संहृत्य (७) चेष्टितैः।
शैशवैरेव धर्म्मात्मा श्वसन्नन्तर्ययौ गृहम् ॥
सुनीतिस्तनयं प्रेक्ष्य विम्लानमुखपङ्कजम्।
अङ्कमारोप्य कृपया ध्रुवं समवमानितम्।
अभिमृज्य च तं बालं मूर्द्धन्युपाघ्राय चासकृत् (८)।
किञ्चित् परिम्लानमुखी पुत्रं पप्रच्छ भूपतेः ॥
कथं वत्साद्य ते वक्त्रं परिम्लानमिवेक्ष्यते।
केन किं कृतमद्येह वद वत्स! तवाप्रियम् ॥
इत्युक्तः स जनन्या वै रुरोद नृपबालकः।
दीर्घं निःश्वस्य बहुशो वक्तुं किञ्चिन्न चाशकत् ॥
माताह वत्स! मा रोदीर्व्वद विप्रियकारणम्।
विद्यमाने नरपतौ वत्स! केनावमानितः? ॥
अपोऽथ समुपस्पृश्य प्रमृज्याश्रूणि नेत्रयोः।
मात्रा पृष्टोऽपि निर्व्वन्धात् (९) ध्रुवस्तां प्रत्यभाषत ॥
संपृच्छे जननि! त्वाहं कथय त्वं न वै मृषा।
भार्य्यात्वेऽपि च सामान्ये (१०) कथं सा सुरुचिः प्रिया
कथं न भवती मातः! प्रिया क्षितिपतेरसि।
कथमुत्तमतां (११) प्राप्त उत्तमः सुरुचेः सुतः ॥

---

(७) नियम्य संरुध्य इति यावत्।

(८) असकृत् पुनः पुनः। (९) निर्व्वन्धात् अतियत्नात।

(१०) सामान्ये साधर्म्ये। (११) उत्तमताम् उत्कृष्टताम्।

कुमारत्वेऽपि सामान्ये कथं वाहमनुत्तमः ।
सुकुच्चिः सुरुचिः कस्मान्मन्दभाग्यासि वा कथम् ? ।
कथं नृपासनार्होऽयमुत्तमो नाहमेव च ॥
उत्तमेन कृतं किं नु सुकृतं किं मया पुनः ।
दुष्कृतं वा कृतं राज्ञि ! तन्मे कथय सुव्रते ! ॥
इति श्रुत्वा वचस्तस्य सुनीतिः स्वसुतस्य वै ।
वक्तुं तमुपचक्राम (१२) त्यक्त्वा सापत्न्यभाषितम् (१३) ॥

सुनीतिरुवाच ।

अयि तात महाबुद्धे ! विशुद्धेनान्तरात्मना (१४) ।
निवेदयामि ते सर्व्वं मावमाने मतिं कृथाः ॥
तया यदुक्तं तत् सर्वं तथ्यमेव (१५) न चान्यथा ।
सा हि राज्ञो महाराज्ञी महिषी चातिवल्लभा ॥
तया जन्मान्तरे तात ! यत् पुण्यं समुपार्ज्जितम् ।
तत्पुण्योपचयाद्राजा सुरुच्यां प्रेमवान् भृशम् ॥
मादृशो मन्दभाग्या याः प्रमदाः सुप्रतिष्ठिताः ।
केवलं राजपत्नीत्ववादस्तासु न तत्प्रियाः ॥
सुकृतैरर्जितैः पूर्वमुत्तमस्योत्तमोदरे ।
उवाच तस्याः पुण्याया नृपसिंहासनोचितः ॥

---

(१२) उपचक्राम उपचक्रमे आरब्धवती, परस्मैपदमार्षम् ।
(१३) सापत्न्यभाषितं शत्रुताभावम् ।
(१४) विशुद्धेनान्तरात्मना निर्म्मलान्तःकरणेन ।
(१५) सत्यं ।

चन्द्राभमातपत्रञ्च शुभे चापि च चामरे ।
भद्रासनं तथोच्चञ्च तुरङ्गाश्च मदोद्धुराः (१६) ॥
निःसपत्नं शुभं राज्यं सौभाग्यं सर्वसम्पदः ।
सुकृतैरेव जायन्ते सिद्धिर्मानसिकी तथा ॥
मानापमानयोस्तात ! सुकृतं कारणं परम् ॥

ध्रुव उवाच ।

मा बाल इति मत्वा मामवमंस्थास्तपस्विनि !
यद्यहं मानवे वंशे जातोऽस्म्यत्यन्तपावने ।
उत्तानपादतनयस्त्वदीयोदरसम्भवः ॥
तप एव हि चेन्मातः ! कारणं सर्वसम्पदाम् ।
ततोऽहं साधयिष्यामि पदमन्यैर्दुरासदम् (१७) ।
अनुज्ञां देहि मे मातराशीर्भिरभिनन्दय ॥
साभिज्ञाय कुमारं तं महावीर्यं स्वकुक्षिजम् ।
उवाच नाहं शक्तास्मि त्वामनुज्ञातुमात्मना ॥
क्व पञ्चवर्षबालोऽसि क्व तपोऽतिसुदुष्करम् ।
दुराराध्यो हि गोविन्दस्ततो बालक ! वारये ॥
त्वदेकतनया तात ! त्वदाधारैकजीविता (१८) ।
त्वमन्धयष्टिरसि मे शरणं मे त्वमेव हि ॥

---

(१६) मदोद्धुरा मदोद्धताः मदमत्ता इत्यर्थः ।

(१७) दुरासदम् दुष्प्रापम् ।

(१८) त्वदाधारस्त्वदाश्रयः एकं केवलं जीवितं यस्याः सा तन्मात्रैकावलम्बनजीविता इत्यर्थः ।

लब्धोऽसि कतिभिः कृच्छ्रैरिष्ट्वा संप्रार्थ्य देवताः ।
स त्वं वत्स ! कथं याया मां विहाय सुदुःखिनीम् ॥

ध्रुव उवाच ।

नाहं जीवामि भो ! मातस्तत्सपत्न्या यदीरितम् ।
प्रविश्य तन्मे हृदयं शरवन्मर्म्म (१९) कृन्तति ।
नावमानात् परं दुःखं क्षत्त्रियस्य विशेषतः ।
सोऽहमाराधयिष्यामि सर्वदुःखहरं हरिम् ॥

सुनन्द उवाच ।

सा विमृश्य सुतस्याथ हितैव प्राणधारणम् ॥
दुष्करं तत्तपस्येव शुभं प्राणवियोजनम् ॥
अथोवाच ध्रुवं राज्ञी रुदती करुणं बहु ।
गच्छाराधय गोविन्दं तपसा परमेण हि ॥
कुशलाः सन्तु पन्थानो देवा रक्षन्तु सर्व्वथा ।
साधयाभीप्सितं वत्स ! त्वरयास्तु समागमः ॥
इत्यनुज्ञां स्वमातुर्वै लब्ध्वा राजकुमारकः ।
प्रतस्थे तपसेऽरण्यं हृदयेन विदूयता (२०) ॥
स्वसौधात् स विनिर्गत्य बालोऽबालपराक्रमः ।
अनुकूलेन मरुता दर्शिताध्वा महामनाः ॥
स मातृदेवतोऽभिज्ञः केवलं राजवर्त्मनि ।
न वेद काननाध्वानं क्षणं दध्यौ नृपात्मजः ॥

---

(१९) मर्म्म जीवनाधारम् ।

(२०) विदूयता आर्षप्रयोगः विदूयमानेन परितप्यमानेन हृदयेनोपलक्षितः, विशेषणे तृतीया ।

# शिविराजोपाख्यानम्।

## शेष उवाच।

अथाख्यास्ये (१) महाभाग: शिविसौशीनरो यथा।
प्राप स्वर्गं महाराज: पुण्यात्मा भुवि विश्रुत:।
स चाश्वमेधं राजर्षि: शिविरौशीनरोऽकरोत्॥
यत्र यज्ञे महाभागा मुनयश्च तपोधना:।
पराशरो गालवोऽत्रिर्वशिष्ठो जाजलिस्तथा॥
पञ्चैते धर्म्मसहिता (२) ऋत्विजो (३) विजितेन्द्रिया:॥
अन्ये महर्षय: सर्वे सदस्या: सर्व्वत: स्थिता:॥
यो यमिच्छति कामं वै शिवि: सर्वमपूरयत्।
नापूर्णकामस्तत्रासीत् यज्ञे तस्य महात्मन:।
ग्रामान्रथान् गजानश्वान् कन्या दासीरलङ्कृता:।
अददद् ब्राह्मणेभ्योऽसौ धेनु: शतसहस्रश:॥
सर्वं शशंसुस्तं यज्ञं महेन्द्रादतिशायनम्।
देवाश्च सर्वे तत्रासन् मूर्त्तिमन्त: महाग्नय:॥
परीक्षमाणस्तद्धर्म्मं महेन्द्र: श्येनतां गत:।
कपोतरूपमग्निञ्च पर्य्यधावत वेगवान्॥
ऊरुं राज्ञ: समासाद्य कपोत: श्येनजाद्भयात्।
शरणार्थी महाभाग! निलिल्ये भयविह्वल:॥

---

(१) आख्यास्ये आख्यास्यामि आत्मने पदमार्षम्।
(२) धर्म्मसहिता: धार्म्मिका:।
(३) ऋत्विज: याजका: ऋत्विजो याजकाश्च ते इत्यमर:।

श्येनो वेगेन धावन् वै शिबेरङ्कमुपाश्रितम्।
दृष्ट्वा कपोतमुद्भ्रम्य राजानमिदमब्रवीत् ॥
धर्म्मात्मासि महाराज! सर्वैरेव त्वमुच्यसे।
कथं धर्म्मविरुद्धं वै कर्म्माचरसि ग्नतुहन्! ॥
जन्तूणां विविधा राजन्नाहाराः परिकल्पिताः।
तेन विश्वसृजा सृष्टेः प्रागेव परिमृष्यता ॥
मनुष्याणां यथा ह्यन्नं देवानाममृतं तथा।
पशूनाञ्च तृणान्येव व्याघ्रादीनाञ्च जन्तवः ॥
पक्षिणाञ्च तथाहारः प्रतिजाति विशेषतः।
तत्रास्माकं महाराज! कपोताद्या निरूपिताः ॥
आहारत्वेन तेनैव जीवनार्थं हि वेधसा।
विहितं भक्षणं धात्रा पीड्यमानस्य वै क्षुधा (४) ॥
मारक्षोऽधर्म्मलोभेन (५) नेतद्धर्म्मस्य कारणम् ॥
मम सप्तदिनान्येव क्षुधितस्य गतानि वै।
निराहारस्य राजेन्द्र! तद्भवाननुमोदताम् ॥

शिबिरुवाच।

त्रासितोऽयं त्वया पक्षी मामेव शरणं गतः।
शरणागतमेनं हि कथं त्यक्षेय (६) भयान्वितम् ॥
एतस्य रक्षणे धर्म्मं महान्तं किं न पश्यसि।
पस्पन्दमानः संभ्रान्तः कपोतः श्येन जायते ॥

---

(४) क्षुधा क्षुधया तृतीयान्तं पदम्। (५) कपोतमिति शेषः।
(६) त्यक्षेय त्यक्ष्यामि, आत्मनेपदमार्षम्।

जीवितार्थी ममाभ्यासे तस्य त्यागो विगर्हितः।
यत् पापं ब्रह्महत्यायां दोग्ध्रीं हत्वा च यद्भवेत्।
शरणागतसंत्यागे तदेव पातकं नृणाम्॥

श्येन उवाच।

आहारात् सर्वभूतानि प्रभवन्ति महीपते!
आहारेणैव वर्द्धन्ते आहारः प्राणधारणम्॥
स्रक्चन्दनानुलेपाद्यैर्वसनाभरणादिभिः।
न जीवो रक्षितुं शक्यो विनाहारेण पार्थिव!॥
आहारेण विना प्राणा मम यास्यन्ति सम्प्रति।
मां विना मम ये दाराः पुत्त्राश्च पितरौ तथा।
सर्वे प्राणान् विमोक्ष्यन्ति विनाहारेण भूमिप!॥
एकं कपोतं रक्षंस्त्वं हंसि प्राणान् बहूनपि॥
धर्म्मार्थमपि यत् कर्म्म धर्म्मानन्यान् प्रपीड़येत्।
न स धर्म्म इति प्रोक्तो विधर्म्मः स महीपते!॥
अविरोधेन यो धर्म्म उत्तमः स हि कीर्त्तितः।
विरोधिषु महीपाल! विचार्य्य गुरुलाघवम्।
बाधीन यत्र दृश्येत तं धर्म्मं समुपाचरेत्।
गुरुलाघवविज्ञानं धर्म्माधर्म्मेषु शस्यते।
यतो भूयांस्ततो राजन्! वर्त्तितव्यं भवादृशः॥

राजोवाच।

बहुकल्याणसंयुक्तं भाषसे वचनं खग!।
सुपर्णः (७) पक्षिराजस्त्वं नान्यो भवितुमर्हसि॥

---

(७) सुपर्णः गरुड़ः, सुपर्णो गरुड़स्तार्क्ष्यः इत्यमरः।

तथा हि ते वचः सौम्य ! (८) धर्म्मसन्तानसंयुतम् (९)
धर्म्मज्ञोऽसि महाभाग ! न तेऽस्त्यविदितं क्वचित्।
शरणागतसन्त्यागं कथं वह्वभिमन्यसे ॥
आहारार्थं समारम्भो यदि तेऽयं विहङ्गम ! ।
शक्यः कर्त्तुं मया सोऽपि बहुधैव तवाधुना ॥
गोवृषो वा वराहो वा मृगो वा महिषोऽपि वा।
यं यं कामयसे पक्षिन् ! तं ते सम्पादयाम्यहम् (१०)।
नैनं तक्तुमहं शक्ये भयेन शरणागतम् ॥

श्येन उवाच।

न वराहं वृषं वापि न मृगान् महिषानथ।
भक्षयामि महाराज ! किं तैर्म्मे ये त्वदीरिताः ॥
विधात्रा विहितो भक्ष्यः कपोतः क्षत्त्रियर्षभ !
तं विहायामृतमपि त्वहं भक्त्यं न कामये ॥
समुत्सृज महीपाल ! विधिना कल्पितं मम।
श्येनः कपोतमत्तीति को न जानाति भूतले ? ॥

राजोवाच।

राष्ट्रं शिवीनामृद्धिं वै ददामि तव (११) खेचर ! ।
यच्च कामयसे कामं श्येन ! सर्व्वं ददामि ते ॥
विनेमं पक्षिनं भीतं शरनार्थिनमागतम्।

---

(८) सौम्य साधो ! श्येनसम्बोधनम्। (९) धर्म्मसन्तानं धर्म्मबहुलम्।
(१०) सम्पादयामि अर्पयामि।
(११) तव तुभ्यं सम्बन्धविवक्षया षष्ठी।

येन कामेन ते पक्षिंस्त्याज्योऽयं हि कपोतकः।
तद्वदस्व ददाम्येष तं कामं न कपोतकम्॥

श्येन उवाच।

महाराज! कपोते ते यदि स्नेहोऽधिको भवेत्।
आत्मनो मांसमुत्कृत्य कपोतेन तुलार्पितम्।
समं कृत्वा ददस्वाद्य तेन तृप्तिर्भवेन्मम॥

राजोवाच।

अनुग्रहमिमं मन्ये श्येन! यन्मा * मिभाषसे॥
दास्यामि मांसं देहस्य कपोतेन तुलाधृतम्॥

शिष्य उवाच।

अथ मांसं स्वमुत्कृत्य राजा परमधार्म्मिकः।
तुलयामास (१२) तुलया (१३) कपोतेन समं द्विज!॥
दीयमाने ततो मांसे गात्रादुत्कृत्य भूभृता।
अतिरिक्तः कपोतोऽभूत् भूयो मांसमदात् नृपः॥
न पर्य्याप्तं यदा मांसं कपोतेन समं द्विज!।
निर्म्मांसोऽथ स भूपाल आरुरोह स्वयं तुलाम्॥

शिष्य उवाच।

मा कार्षीः साहसं (१४) राजन्निन्द्रोऽहं समुपागतः।
परीक्षितुं त्वां धर्म्मेषु कपोतोऽग्निरयं स्वयम्॥

---

* मा इति आर्षप्रयोगः मामित्यर्थः।

(१२) तुलयामास समञ्चकार। (१३) तुलया तुलादण्डेन।

(१४) साहसं आत्मार्पणरूपमनुचितकार्य्यम।

यदुत्कृत्य स्वमांसानि त्वया दत्तानि भूपते।
एषा ते महती कीर्त्तिर्लोकानभिभविष्यति॥
यावल्लोके मनुष्यास्तत् कथयिष्यन्ति पार्थिव!।
तावत् कीर्त्तिश्च वासश्च त्रिदिवे ते भविष्यति॥
देहश्च ते महाराज! नीरुजः प्रकृतोभवेत्।
इत्युक्त्वा स महीपाल मारुरोह दिवं पुनः॥
साधु साधु महाराज! कीर्त्तिस्ते विपुला भुवि।
कृपालुस्त्वत्समो राजा न भूतो न भविष्यति।
इतुरक्त्वान्तर्दधे विप्र। राजापि कृतवान् क्रतुम् (१५)
समाप्तयज्ञो नृपतिः स्वपुरं प्रतिजग्मिवान्।
उपविष्टः स राजर्षिः कश्चिद्ब्राह्मणमागतम्।
दृष्ट्वा दरिद्रं क्षीणञ्च विम्लानं कुपटावृतम्।
देहि देहीति याचन्तं पप्रच्छ पुरतः स्थितम्॥
किमिच्छसि द्विज! त्वं हि निर्भयो वद मां प्रति।
यदिच्छसि तदेवाहं ददामि तव तुष्टये॥

ब्राह्मण उवाच।

क्षुधितोऽहं महाराज। भोक्तुमिच्छामि साम्प्रतम्।
जानीहि मां सदा त्वं हि संप्राप्तं ब्रह्मराक्षसम्॥
लालसा (१६) महती जाता तव दृष्ट्वा सुतं नृप!।
नवयौवनसम्पन्नं रूपेणाप्रतिमं भुवि॥

---

(१५) क्रतुं यज्ञम्।
(१६) लालसा स्पृहा।

तं निहत्य स्वयं राजन् खड्गेन निशितेन (१७) वै।
संस्कृत्य चात्मना मह्यं भक्ष्यं देहि महीपते ! ॥
राजा तु तत् प्रतिश्रुत्य विचार्य्यैवाब्रवीद् द्विजम्।
यथा करोमि ते ब्रह्मन्नातिथ्यं तव मद्गृहे ॥
द्विजस्त्वाह कुरुष्व त्वं यन्मदर्थं प्रतिश्रुतम् ॥
माध्याह्निकाय (१८) गच्छामि नदीं निकटवाहिनीम्।
इत्युक्त्वा स गतो विप्रो राजापि तनयं ततः।
असिनाहत्य संस्कारं स्वयमेव चकार ह ॥
यदा नायात् द्विजः सोऽपि तदा व्यग्रा (१९) महीपतिः।
शिरसादाय तद्भक्ष्यं नदीतीरं जगाम ह ॥
तत्रान्वेष्य द्विजं तञ्च भ्रमति स्म नदीतटे।
तावद्दूतः समागत्य तमाह नृपतिं तदा ॥
राजन् ! स एव विप्रस्ते योऽसौ ब्राह्मणराक्षसः।
पुरं दहति दीप्तेन वह्निना ज्वालमालिना ॥
दग्धं प्रायः पुरं सर्व्वं यथारुचि तथा कुरु ॥
तत्श्रुत्वा स नृपः क्षिप्रं तथैव शिरसा वहन्।
संस्कृतं मांसमस्यैव त्वरार्थं पुरमागमत् ॥
तं द्विजं समुपागम्य जगाद कृपणं वचः।
कथं क्रुद्धोऽसि भगवन्नतत्ते भक्ष्यमुत्तमम् ॥

---

(१७) निशितेन शाणितेन।
(१८) माध्याह्निकाय मध्याह्नसन्ध्याद्युपासनार्थम्।
(१९) व्यग्रः व्याकुलः।

यथोक्तमेव सम्पन्नं भुङ्क्ष्व कालात्ययोऽस्तु न॥
तत् श्रुत्वा स द्विजः प्राह श्रद्धा ते ह्यतिथौ परा।
ब्राह्मणे सुतरां राजन्! मद्वचः पालयाधुना॥
इदं यत् संस्कृतं मांसं तद्भुङ्क्ष्व स्वयमेव हि।
तेन मे विपुला प्रीतिस्तृप्तिश्च किल शाश्वती॥
इत्युक्तः स तथा कर्त्तुं प्रवृत्तोऽसौ यदा नृपः।
तदा स ब्राह्मणो हस्तं जग्राह च जगाद च॥
अहं प्रजापतिर्ब्रह्मा त्वमायातः परीक्षितुम्॥
सिद्धोऽसि परमोदारः स्वर्गे वासस्तवाक्षयः।
पुरञ्च पश्य सकलं हाटकेन (२०) विनिर्म्मितम्॥
इत्युक्तवति तस्मिन् व देवदेवे जगत्पतौ।
आजगाम स एवास्य कुमारो यौवनान्वितः॥
ववन्दे पितरं तञ्च ब्राह्मणञ्च पुरस्थितम्।
अन्तर्दधेऽथ भगवान् ब्रह्मा विश्वसृजां पतिः॥
स राजा तनये न्यस्य (२१) राज्यं वनगतः स्वयम्।
भौतिकं देहमुत्सृज्य जगामत्रिदशालयम्॥

---

(२०) हाटकेन सुवर्णेन।
(२१) न्यस्य निक्षिप्य।

सम्पूर्णम्।